श्रीमते रामानुजाय नमः



# वेदान्तदेशिकस्तोत्रमाला

प्रकाशक—

**श्री वैकुण्ठनाथ देवस्थान**

१२-ए, कालीकृष्ण टैगोर स्ट्रीट,

कलकत्ता-७

गुरुपूर्णिमा संवत् २०२६

प्रथम संस्करण
३०००

कलकत्ता

मूल्य
एक रु० ५० पैसे

# विषय-सूची

॥ श्रीः ॥

श्री रमा वैकुण्ठनाथपरब्रह्मणे नमः

श्रीमते रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

# प्रास्ताविकं किञ्चित्

आस्तिक महाशयाः ! अद्येद विज्ञापयामि युष्माक सविधे। श्री कविनार्किकसिंह सर्वतन्त्रस्वतन्त्रश्रीमद्वेङ्कटनाथश्रीवेदान्ताचार्यैर्विरचिताना नानाविधाना सरलसमुचिताना सग्रह विस्तृतदशाशोभिना भगवतो देव्या आचार्यपरपरायाश्च विषये प्रवृत्ताना स्तोत्राणाकदम्बः इदानीं प्रकाश्यमानः मालेव कालविहिता सर्वेषा आमोदाय भविष्यति।

पूर्वाचार्याः भगवत्तोषकरेषु साधनेषु प्रथमोपाय स्तुतिमेवाङ्गी चक्रुः। परमात्मा तावत् सर्वथा तोषयितव्यएव। यतः सस्तुत्यक्षर वैष्णवाष्वसु नृणा अरविन्दलोचनस्य अरविन्द संभवायाश्च मनस्तोषंविना न तुषमात्रमपि सभाव्यते कर्हिचित्।

एव स्तव्य भूतस्स परम पुरुषः स्तवप्रिय इत्यपि प्रथते। स्व स्तुतौ प्रवृत्ताना परिमित शक्तीनामस्मद्विधाना शेषपूरणमपि स्वयमेव विधत्ते सोऽन्तः प्रविश्य वाचमिमा प्रसुप्ता सञ्जीवयन् सन्धुक्षयन्निन्द्रियाणि च हृषीकेशत्वात्। तस्मा दुच्यते सः स्तोतेत्यपि। स्तुतिप्रयोजक इतियावत्। तथाहि नामसहस्रके पापठ्यते "स्तव्यः स्तवप्रियस्तोतेति।"

ईदृशस्तोत्रावल्याः प्रथममारम्भः अस्मदाचार्यकुले श्री यामुनमुनिमूल इति वदन्ति। अनन्तरं श्रीभाष्यकृतः श्रीमत्कूरेशाः तत्पुत्ररत्नभट्टपराशरपादाः इत्युत्तरोत्तरं पुङ्खमाने स्तुतिपूरे चरमाचार्याः श्रीमद्वेदान्तगुरवः

तत्पूरपूर्तिपरश्शतस्तुतिस्तोमसदभणेन व्यद्धुरिति विनि श्चितमेव विपश्चिताम् ।

इमानि स्तोत्राण्यनुसन्धीयमानानि व्युत्पन्नाना सद्य परमात्मनिचित्त रञ्जयन्ति । ससार मरुभ्रान्तारसतापं शमयन्ति । भगवन्मुखोल्लासमुखेनेह लोके परत्र च श्रेयो निश्रेयसचप्रयच्छन्ति । सिद्धान्त तत्वाना परिचयपरिपा टींचोपचिन्वन्ति। अव्युत्पन्ना अप्यहो आचाय स्तुतिजाल शब्दसौन्दर्याकृष्टदृष्टयोऽदृष्टार्थ तृपितजनता तीर्थस्नान क्रमेणानवरतमत्रावतीय विहरन्ति ।

एवमवश्यमभ्यसनीयानामेषा स्तोत्राणामावलि, आस्तिक भक्तजनेपयोगाय श्रीमन्निगमान्त महादेशिक-स्य सप्तशताब्दपूर्ति महोत्सवोपलक्षणरूपेण एते महा भागा विलक्षण विख्यात वैष्णव श्रीविभूपिता पुष्कर क्षेत्रे पश्चिमधामनि प्राच्यभूमौ गङ्गासागरसंगमे वङ्ग-देशीय कलकत्ता नगरेच विष्णो विपुलालयनिर्माण, मूर्तिप्रतिष्ठापननित्यपूजा नैमित्तिकमहोत्सवादि सेवा विशेपमनन्यनिरपेक्ष लोकोत्तर च सचालयन्त सद्गुरु श्रीबालमुकुन्दमहादेशिककृपापात्रभूता श्रीमन्त गोविन्द लाल गोकुलचन्द्र वागड महोदया श्रेष्ठिवर्याः प्रकाशयन्ति । सज्जनास्सर्वे एककण्ठमेतन्मुद्रणप्रयास सफली कुर्वाणा श्रेष्ठिवयस्यास्य सपरिवारस्य सर्वदेश दशा कालेष्वप्यव्याहतैश्वर्यादिकमनुगृह्णन्त तथैव श्री वैकुण्ठ नाथं प्रार्थयन्तश्चाशीर्भिरेन योजयन्तु ॥

इति आनुषङ्गिकमत्रान्वय प्राप्य पूलो धन्य परिशोधकश्च

नायलपाक्कम्, रङ्गनाथाचार्य

प्रधानार्चक

श्री वैकुण्ठनाथ देवस्थानम्

कलकत्ता

## ❁ दिव्यदेशमङ्गलाशासनश्लोकाः ❁

विधिविहितसपर्यां वीतदोषानुषङ्गा-
मुपचितधनधान्यामुत्सवैस्त्यानहर्षाम् ।
स्वयमुपचिनु नित्यं रङ्गधामन् स्वरक्षां
शमितविमतपक्षां शाश्वतीं रङ्गलक्ष्मीम् ॥ १ ॥

प्रशमितकलिदोषां प्राज्यभोगानुबन्धां
समुदितगुणजातां सम्यगाचारयुक्ताम् ।
श्रितजन बहुमान्यां श्रेयसीं वेङ्कटाद्रौ
श्रियमुपचिनु नित्यं श्रीनिवासत्वमेव ॥ २ ॥

वरद विरचयत्वं वारिताशेषदोषां
पुनरुपचितपुण्यां भूषितां पुण्यकोट्या ।
सितमुदितमनोभिः तावकैर्नित्यसेव्यां
हतरिपुजनयोगां हस्तिधाम्नस्समृद्धिम् ॥ ३ ॥

नवनवबहुभोगां नाथ नारायण त्वं
विरचय दुरितौघैस्तामनाघ्रातगन्धाम् ।
सहजसुलभदास्यैस्सद्भिरभ्यर्थनीयां
यतिपरिबृढहृद्यां यादवाद्रेस्समृद्धिम् ॥ ४ ॥

श्रीरङ्ग द्विरद वृपाद्रि पूर्वकेपु
स्थानेपु स्थिर विभवा भवत्सपर्या ।
आकल्प वरद विधुतवैरिपक्षा
भूयस्या भवदनुकम्पयैव भूयात् ॥ ५ ॥

कल्याणमावहतु कार्तयुग स्वधर्म
प्रख्यापयन् प्रणिहितेपु नरादिकेपु ।
आद्य क्रमप्यधिगतो रथमष्टचक्र
बन्धुस्सता बदरिकाश्रमतापसोन ॥ ६ ॥

—※—



श्री वैकुण्ठनाथ भगवान्

सव्यं पादं प्रसार्य श्रितदुरितहरं दक्षिणं कुञ्चयित्वा,
जानुन्याधाय सव्येतरमितरभुजं नागभोगे निधाय।
पश्चाद्बाहुद्वयेन प्रतिभटशमने धारयन् शंखचक्रे,
देवीभूषादिजुष्टो जनयतु जगतां शर्म वैकुण्ठनाथः॥



श्री हयग्रीवमूर्तिः

ज्ञानानन्दमय देव निर्मलस्फटिकाकृतिम् ।
आधार सर्वविद्याना हयग्रीवमुपास्महे ॥



श्री कवितार्किकसिंहाः सर्वतन्त्रस्वतन्त्राः श्रीमद्वेंकटनाथाः

श्री वेदान्ताचार्याः

जीवन जगता जीयान् किमाप्यपगतस्पृहम् ।
स्वतन्त्र सर्वतन्त्रेषु वेंकटेशाह्वय महः ॥



दर्शनस्थापकाचार्याः श्रीरामानुजगुरवः

उपवीतिनमूर्ध्वपुण्ड्रवन्त त्रिजगत्पुण्यफल त्रिदण्डहस्तम् ।
शरणागतसार्थवाहमीडे शिखय शेखरिण पतिं यतीनाम् ॥



श्रीमदुत्तराहोब्रिल झालरियामठाधिपति १००८
श्री बालमुकुन्दमहादेशिकाः



श्री उत्तराहोबिल झालरिया मठाधीश्वर जगद्गुरु श्री १००८
स्वामी श्री वीर राघवाचार्यजी महाराज

# वेदान्तदेशिकस्तोत्र ला

## आलवन्दार स्तोत्रम्

स्वादयन्निह सर्वेषां, त्रय्यन्तार्थं सुदुर्ग्रहम् ।
स्तोत्रयामास योगीन्द्र स्तं वन्दे यामुनाह्वयम् ॥ १

नमो नमो यामुनाय यामुनाय नमो नमः ।
नमो नमो यामुनाय यामुनाय नमो नमः ॥ २

नमो यामुनपादाब्जरेणुभिः पावितात्मने ।
विदिताऽखिलवेदाय गुरवे विदितात्मने ॥ ३

नमोऽचिन्त्याद्भुताऽक्लिष्टज्ञानवैराग्यराशये ।
नाथाय मुनयेऽगाधभगवद्भक्तिसिन्धवे ॥ ४

तस्मै नमो मधुजिदङ्घ्रिसरोजतत्व-
ज्ञानाऽनुरागमहिमाऽतिशयान्तसीम्ने ।
नाथाय नाथमुनयेऽत्र परत्र चाऽपि
नित्यं यदीयचरणौ शरणं मदीयम् ॥ ५

भूयो नमोऽपरिमिताच्युतभक्तितत्त्व-
ज्ञानामृताऽब्धिपरिवाहशुभैर्वचोभिः ।
लोकेऽवतीर्णपरमार्थसमग्रभक्ति-
योगाय नाथमुनये यमिनां वराय ॥ ६

तत्त्वेन यश्चिदचिदीश्वरतत्स्वभाव-
भोगाऽपवर्गतदुपायगतीरुदारः ।
सन्दर्शयन्निरमिमीत पुराणरत्नं
तस्मै नमो मुनिवराय पराशराय ॥ ७

माता पिता युवतयस्तनया विभूति
सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य नः कुलपतेर्वकुलाभिरामं
श्रीमत्तदङ्घ्रियुगलं प्रणमामि मूर्ध्ना ॥ ८

यन्मूर्ध्नि मे श्रुतिशिरस्सु च भाति यस्मिन्
अस्मन्मनोरथपथः सकलः समेति ।
स्तोष्यामि नः कुलधनं कुलदैवतं तत्
पादारविन्दमरविन्दविलोचनस्य ॥ ९

तत्त्वेन यस्य महिमार्णवशीकराणुः
शक्यो न मातुमपि शर्वपितामहाद्यैः ।
कर्तुं तदीयमहिमस्तुतिमुद्यताय,
मह्यं नमोऽस्तु कवये निरपत्रपाय ॥ १०

यद्वाश्रमावधि यथामति वाप्यशक्ताः
स्तौम्येवमेव खलु तेऽपि सदा स्तुवन्तः ।
वेदाश्चतुर्मुखमुखाश्च महार्णवान्तः
को मज्जतोरणुकुलाचलयोर्विशेषः ॥ ११

किन्त्वेष शक्त्यतिशयेन न ते‌ऽनुकम्प्यः
स्तोताऽपि तु स्तुतिकृतेन परिश्रमेण ।
तत्र श्रमस्तु सुलभो मम मन्दबुद्धे
रित्युद्यमोऽयमुचितो मम चाब्जनेत्र ॥ १२

नाऽवेक्षसे यदि ततो भुवनान्यमूनि
नालं प्रभो भवितुमेव कुतः प्रवृत्तिः ।
एवं निसर्गसुहृदि त्वयि सर्वजन्तोः
स्वामिन्न चित्रमिदमाश्रितवत्सलत्वम् ॥ १३

स्वाभाविकाऽनवधिकाऽतिशयेशितृत्वं
नारायण ! त्वयि न मृष्यति वैदिकः कः ? ।
ब्रह्मा शिवः शतमखः परमः स्वराडि-
त्येतेऽपि यस्य महिमार्णवविप्रुषस्ते ॥ १४

का श्रीः ? श्रियः परममत्वममाश्रयः कः ?
कः पुण्डरीकनयनः ? पुरुषोत्तमः कः ? ।
कस्याऽयुतायुतशतैककलांशकांशे
विश्वं विचित्रचिदचित् प्रविभागवृत्तम् ॥ १५

वेदाऽपहारगुरुपातकदैत्यपीडा-
द्यापद्विमोचनमहिष्ठफलप्रदानैः ।
कोऽन्यः प्रजापशुपतिः परिपाति कस्य
पादोदकेन स शिवः स्वशिरोधृतेन ॥ १६

कस्योदरे हरविरिंचिमुखः प्रपञ्चः
को रक्षतीममजनिष्ट च कस्य नाभेः ।
क्रान्त्वा निगीर्य पुनरुद्गिरति त्वदन्यः
कः केन चैष परवानिति शक्यशङ्कः ॥ १७

त्वां शीलरूपचरितैः परमप्रकृष्ट-
सत्वेन सात्विकतया प्रबलैश्च शास्त्रैः ।
प्रख्यातदैवपरमार्थविदा मतैश्च
नैवाऽऽसुरप्रकृतयः प्रभवन्ति बोद्धुम् ॥ १८

उल्लङ्घितत्रिविधसीमसमातिशायि
सम्भावन तव परिव्रढिमस्वभावम् ।
मायाबलेन भवताऽपि निगूह्यमान
पश्यन्ति केचिदनिश त्वदनन्यभावाः ॥ १९

यदण्डमण्डान्तरगोचरञ्च यत्,
दशोत्तराण्यावरणानि यानि च ।
गुणा प्रधान पुरुष परम्पद
परात्पर ब्रह्म च ते विभूतय ॥ २०

वशी वदान्यो गुणवानृजु शुचि
मृदुर्दयालुर्मधुर स्थिर सम ।
कृती कृतज्ञस्त्वमसि स्वभावत
समस्तकल्याणगुणामृतोदधि ॥ २१

उपर्युपर्यब्जभुवोऽपि पूरुषान्
प्रकल्प्य ते ये शतमित्यनुक्रमात् ।
गिरस्त्वदेकैकगुणावधीप्सया
सदा स्थिता नोद्यमतोऽतिशेरते ॥ २२

त्वदाश्रिताना जगदुद्भवस्थिति
प्रणाशससारविमोचनादय ।
भवन्ति लीलाविधयश्च वैदिका
स्त्वदीयगम्भीरमनोऽनुसारिण ॥ २३

नमो नमो वाङ्मनसोऽतिभूमये
नमो नमो वाङ्मनसैकभूमये ।
नमो नमोऽनन्त महाविभूतये
नमो नमोऽनन्तदयैकसिन्धवे ॥ २४

न धर्मनिष्ठोऽस्मि न चात्मवेदी
न भक्तिमांस्त्वच्चरणारविन्दे ।
अकिञ्चनोऽनन्यगति शरण्य
त्वत्पादमूल शरण प्रपद्ये ॥ २५

न निन्दितं कर्म तदस्ति लोके
सहस्रशो यन्न मया व्यधायि ।
सोऽहं विपाकावसरे मुकुन्द !
क्रन्दामि सम्प्रत्यगतिस्तवाग्रे ॥ २६

निमज्जतोऽनन्त ! भवार्णवान्त-
श्चिराय मे कूलमिवासि लब्धः ।
त्वयाऽपि लब्धं भगवन्निदानी-
मनुत्तमं पात्रमिदं दयायाः ॥ २७

अभूतपूर्वं मम भावि किं वा !
सर्वं सहे मे सहजं हि दुःखम् ।
किन्तु त्वदग्रे शरणागतानां
पराभवो नाथ ! न तेऽनुरूपः ॥ २८

निरासकस्यापि न तावदुत्सहे,
महेश ! हातुं तव पादपङ्कजम् ।
रुषा निरस्तोऽपि शिशुस्तनन्धयो
न जातु मातुश्चरणौ जिहासति ॥ २९

तवामृतस्यन्दिनि पादपङ्कजे,
निवेशितात्मा कथमन्यदिच्छति ।
स्थितेऽरविन्दे मकरन्दनिर्भरे
मधुव्रतो नेक्षुरकं हि वीक्षते ॥ ३०

त्वदङ्घ्रिमुद्दिश्य कदाऽपि केनचित्
यथा तथा वाऽपि सकृत् कृतोऽञ्जलिः
तदैव मुष्णात्यशुभान्यशेषतः
शुभानि पुष्णाति न जातु हीयते ॥ ३१

उदीर्णसंसारदवाऽऽशुशुक्षणिं
क्षणेन निर्वाप्य परां च निर्वृतिम् ।
प्रयच्छति त्वच्चरणारुणाम्बुज
द्वयानुरागामृतसिन्धुशीकर ॥ ३२

विलासविक्रान्तपराऽवरालय,
नमस्यदार्तिक्षपणे कृतक्षणम् ।
घन मदीय तव पादपङ्कज
कदा नु साक्षात् करवाणि चक्षुषा ॥ ३३

कदा पुनः शङ्खरथाङ्गकल्पक-
ध्वजारविन्दाङ्कुशवज्रलाञ्छनम् ।
त्रिविक्रम ! त्वच्चरणाम्बुजद्वय
मदीयमूर्द्धानमलंकरिष्यति ॥ ३४

विराजमानोज्ज्वलपीतवासस
स्मिताऽतसीसूनसमाऽमलच्छविम् ।
निमग्ननाभिं तनुमध्यमुन्नत
विशालवक्षःस्थलशोभिलक्षणम् ॥ ३५

चकासतं ज्याकिणकर्कशैः शुभै
श्चतुर्भिराजानुविलम्बिभिर्भुजैः ।
प्रियावतंसोत्पलकर्णभूषण
श्लथालकाबन्धविमर्दशंसिभिः ॥ ३६

उदग्रपीनांसविलम्बिकुण्डला
ऽलकावलीबन्धुरकम्बुकन्धरम् ।
मुखश्रिया न्यक्कृतपूर्णनिर्मला-
ऽमृतांशुबिम्बाम्बुरुहोज्ज्वलश्रियम् ॥ ३७

प्रबुद्धमुग्धाम्बुजचारुलोचनम्
सविभ्रमभ्रू लतमुज्वलाऽधरम् ।
शुचिस्मितं कोमलगण्डमुन्नसं
ललाटपर्यन्तविलम्बितालकम् ॥ ३८

स्फुरत्किरीटाङ्गदहारकण्ठिका
मणीन्द्रकाञ्चीगुणनूपुरादिभिः ।
रथाङ्गशंखासिगदाधनुर्वर-
र्लसत्तुलस्या वनमालयोज्वलम् ॥ ३९

चकर्थ यस्या भवनं भुजान्तरं
तव प्रिय धाम यदीयजन्मभूः ।
जगत्समग्रं यदपांगसंश्रयं
यदर्थमम्भोधिरमन्थ्यबन्धि च ॥ ४०

स्ववैश्वरूप्येण सदाऽनुभूतया-
ऽप्यपूर्ववद्विस्मयमादधानया ।
गुणेन रूपेण विलासचेष्टितैः
सदा तवैवोचितया तव श्रिया ॥ ४१

तया सहासीनमनन्तभोगिनि
प्रकृष्टविज्ञानबलैकधामनि ।
फणामणिव्रातमयूखमण्डल-
प्रकाशमानोदरदिव्यधामनि ॥ ४२

निवासशय्यासनपादुकांशुको-
पधानवर्षातपवारणादिभिः ।
शरीरभेदैस्तव शेषतांगतै-
र्यथोचितं शेष इतीरिते जनैः ॥ ४३

दास सखा वाहनमासन ध्वजो,
यस्ते वितान व्यजन त्रयीमय ।
उपस्थित तेन पुरो गरुत्मता,
त्वदङ्घ्रिसमर्द्दकिणाङ्कशोभिना ॥ ४४

त्वदीयभुक्तोज्झितशेषभोजिना,
त्वया विसृष्टात्मभरेण यद्यथा ।
प्रियेण सेनापतिना निवेदित,
तथाऽनुजानन्तमुदारवीक्षणै ॥ ४५

हताऽखिलक्लेशमलै स्वभावत
स्त्वदानुकूल्यैकरसैस्तवोचितै ।
गृहीततत्तत्परिचारसाधनै
र्निषेव्यमाण सचिवैर्यथोचितम् ॥ ४६

अपूर्वनानारसभावनिर्भर
प्रबुद्धया मुग्धविदग्धलीलया ।
क्षणाऽणवत्क्षिप्तपरादिकालया
प्रहर्षयन्त महिषीं महाभुजम् ॥ ४७

अचिन्त्यदिव्याद्भुतनित्ययौवन
स्वभावलावण्यमयाऽमृतोदधिम् ।
श्रिय श्रिय भक्तजनैकजीवित
समर्थमापत्सखमर्थिकल्पकम् ॥ ४८

भवन्तमेवाऽनुचरन्निरन्तरम्
प्रशान्तनिश्शेषमनोरथान्तर' ।
कदाऽहमैकान्तिकनित्यकिङ्कर
प्रहर्षयिष्यामि सनाथजीवितम् ॥ ४९

# अथ वरदवल्लभा स्तोत्रम्

कान्तस्ते पुरुषोत्तमः फणिपतिः शय्यामनं वाहन
वेदात्मा विहगेश्वरो यवनिका माया जगन्मोहिनी ।
ब्रह्मेशादिसुरव्रजस्सदयितस्त्वद्दासदासीगणः,
श्रीरित्येव च नाम ते भगवति ब्रूमः कथं त्वां वयम् ॥ १

स्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभु-
र्नाऽलं मातुमियत्तया निरवधिं नित्याऽनुकूलं स्वतः ।
त्वां दास इति प्रसन्न इति च स्तोष्याम्यहं निर्भयो,
केश्वरि लोकनाथदयिते दान्ते दयां ते विदन् ॥ २

रुणानिरीक्षणसुधासन्धुक्षणाद्रक्ष्यते,
प्राक्तदलाभतस्त्रिभुवनं सम्प्रत्यनन्तोदयम् ।
क्षरविन्दलोचनमनःकान्ताप्रसादादृते,
क्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित् ॥ ३

महाविभूतिपरमं यद्ब्रह्मरूपं हरे-
ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम् ।

दास सखा वाहनमासन ध्वजो,
यस्ते वितान व्यजन त्रयीमय ।
उपस्थित तेन पुरो गरुत्मता,
त्वदङ्घ्रिसमर्दकिणाङ्कशोभिना ॥ ४४

त्वदीयभुक्तोज्झितशेषभोजिना,
त्वया विसृष्टात्मभरेण यद्यथा ।
प्रियेण सेनापतिना निवेदित,
तथाऽनुजानन्तमुदारवीक्षणै ॥ ४५

हताऽखिलक्लेशमलै स्वभावत
सदाऽऽनुकूल्यैकरसैस्तवोचितै ।
गृहीततत्तत्परिचारसाधनै
र्निषेव्यमाण सचिवैर्यथोचितम् ॥ ४६

अपूर्वनानारसभावनिर्भर
प्रबुद्धया मुग्धविदग्धलीलया ।
क्षणाऽणुवत्क्षिप्तपरादिकालया
प्रहर्षयन्त महिषीं महाभुजम् ॥ ४७

अचिन्त्यदिव्याद्भुतनित्ययौवन
स्वभावलावण्यमयाऽमृतोदधिम् ।
श्रिय श्रियं भक्तजनैकजीवित
समर्थमापत्सखमर्थिकल्पकम् ॥ ४८

भवन्तमेवाऽनुचरन्निरन्तरम्
प्रशान्तनिश्शेषमनोरथान्तर ।
कदाऽहमैकान्तिकनित्यकिङ्कर
प्रहर्षयिष्यामि सनाथजीवितम् ॥ ४९

धिगशुचिमविनीतं निर्दयं मामलज्जं
परमपुरुष ! योऽहं योगिवर्याग्रगण्यैः ।
विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरं
तव परिजनभावं कामये कामवृत्तः ॥ ५०

अपराधसहस्रभाजनं
पतितं भीमभवार्णवोदरे ।
अगतिं शरणागतं हरे !
कृपया केवलमात्मसात्कुरु ॥ ५१

अविवेकघनान्धदिङ्मुखे,
बहुधा सन्ततदुःखवर्षिणि ।
भगवन् ! भव दुर्दिने,
पथस्स्खलितं मामवलोकयाच्युत ॥ ५२

न मृषा परमार्थमेव मे
शृणु विज्ञापनमेकमग्रतः ।
यदि मे न दयिष्यसे ततो
दयनीयस्तव नाथ ! दुर्लभः ॥ ५३

तदहं त्वदृते न नाथवान्
मदृते त्वं दयनीयवान्न च ।
विधिनिर्मितमेतदन्वयं
भगवन् पालय मा स्म जीहपः ॥ ५४

वपुरादिषु योऽपि कोऽपि वा
गुणतोऽसानि यथा तथाविधः ।
तदयं तव पादपद्मयो-
रहमद्यैव मया समर्पितः । ५५

मम नाथ ! यदस्ति योऽस्म्यहं,
　सकलं तद्धि तवैव माधव !
नियतस्वमिति प्रबुद्धधी
　रथवा किन्नु समर्पयामि ते ॥　　५६

अवबोधितवानिमां यथा,
　मयि नित्यां भवदीयतां स्वयम् ।
कृपयैवमनन्यभोग्यतां,
　भगवन् भक्तिमपि प्रयच्छ मे ॥　　५७

तव दास्यसुखैकसङ्गिनां
　भवनेष्वस्त्वपि कीटजन्म मे ।
इतरावसथेषु मास्म भू
　दपि मे जन्म चतुर्मुखात्मना ॥　　५८

सकृत्त्वदाकारविलोकनाशया
　तृणीकृतानुत्तमभुक्तिमुक्तिभिः ।
महात्मभिर्मामवलोक्यतां नय
　क्षणेऽपि ते यद्विरहोऽतिदुस्सहः ॥　　५९

न देहं न प्राणान्न च सुखमशेषाऽभिलषितं
　न चात्मानं नान्यत्किमपि तव शेषत्वविभवात् ।
बहिर्भूतं नाथ ! क्षणमपि सहे यातु शतधा
　विनाशं तत्सत्यं मधुमथन ! विज्ञापनमिदम् ॥ ६०

दुरन्तस्यानादेरपरिहरणीयस्य महतो
　विहीनाचारोऽहं नृपशुरशुभस्यास्पदमपि ।
दयासिन्धो ! बन्धो ! निरवधिकवात्सल्यजलधे !
　तव स्मारं स्मारं गुणगणमितीच्छामि गतभीः ॥६१

अनिच्छन्नप्येवं यदि पुनरितीच्छन्निव रज-
स्तमश्छन्नश्छद्मस्तुतिवचनभङ्गीमरचयम् ।
तथापीत्थं रूपं वचनतवलम्ब्याऽपि कृपया
त्वमेवैवंभूतं धरणिधर ! मे शिक्षय मनः ॥ ६२

पिता त्व माता त्वं दयिततनयस्त्वं प्रिय सुहृत्
त्वमेव त्व मित्रं गुरुरपि गतिश्चासि जगताम् ।
त्वदीयस्त्वद्भृत्यस्तव परिजनस्त्वद्गतिरहं
प्रपन्नश्चैव सत्यहमपि तवैवास्मि हि भरः ॥ ६३

जनित्वाह वंशे महति जगति ख्यातयशसां,
शुचीनां युक्तानां गुणपुरुषतत्त्वस्थितिविदाम् ।
निसर्गादेव त्वच्चरणकमलैकान्तमनसा-
मधोऽधःपापात्मा शरणद ! निमज्जामि तमसि ॥६४

अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः,
कृतघ्नो दुर्मानी स्मरपरवशो वञ्चनसरः ।
नृशंसः पापिष्ठः कथमहमितो दुःखजलधे-
रपारादुत्तीर्णस्तव परिचरेय चरणयोः ॥ ६५

रघुवर ! यदभूस्त्वं तादृशो वायसस्य,
प्रणत इति दयालुर्यच्च चैद्यस्य कृष्ण !
प्रतिभवमपराद्धुर्मुग्ध ! सायुज्यदोऽभू-
र्वद किमुपदमागस्तस्य तेऽस्ति क्षमायाः ॥ ६६

ननु प्रपन्नः सकृदेव नाथ !
तवाहमस्मीति च याचमानः ।
तवानुकम्प्यः स्मरतः प्रतिज्ञां,
मदेकवर्जं किमिदं व्रतन्ते ॥ ६७

अकृत्रिमत्वच्चरणारविन्द
प्रेमप्रकर्षाऽवधिमात्मवन्तम् ।
पितामहं नाथमुनिं विलोक्य,
प्रसीद मद्वृत्तमचिन्तयित्वा ॥ ६८

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं, यामुनेयं नमामि तम् ॥ ६९

—०—

# अथ वरदवल्लभा स्तोत्रम्

कान्तस्ते पुरुषोत्तमः फणिपतिः शय्यासनं वाहनं
वेदात्मा विहगेश्वरो यवनिका माया जगन्मोहिनी ।
ब्रह्मेशादिसुरव्रजस्सदयितस्त्वद्दासदासीगणः,
श्रीरित्येव च नाम ते भगवति ब्रूमः कथं त्वां वयम् ॥ १

यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभु-
र्नाऽलं मातुमियत्तया निरवधिं नित्याऽनुकूलं स्वतः ।
तां त्वां दास इति प्रसन्न इति च स्तोष्याम्यहं निर्भयो,
लोकैकेश्वरि लोकनाथदयिते दान्ते दयां ते विदन् ॥ २

ईषत्त्वत्करुणानिरीक्षणसुधासन्धुक्षणाद्रक्ष्यते,
नष्टं प्राक्तदलाभतस्त्रिभुवनं सम्प्रत्यनन्तोदयम् ।
श्रेयो न ह्यरविन्दलोचनमनःकान्ताप्रसादादृते,
संसृत्यक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित् ॥ ३

शान्ताऽनन्तमहाविभूतिपरमं यद्ब्रह्मरूपं हरे-
र्मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम् ।
यान्यन्यानि यथासुखं विहरतो रूपाणि सर्वाणि ता-
न्याहुः स्वैरनुरूपरूपविभवैर्गाढोपगूढानि ते ॥ ४

आकारत्रयसम्पन्नामरविन्दनिवासिनीम् ।
अशेषजगदीशित्रीं वन्दे वरदवल्लभाम् ॥ ५

—०—

अव्याकृताद्व्याकृतवानसि त्वं
नामानि रूपाणि च यानि पूर्वम् ।
शंसन्ति तेषां चरमां प्रतिष्ठां
वागीश्वर त्वां त्वदुपज्ञवाचः ॥ १२

मुग्धेन्दुनिष्यन्दविलोभनीयां
मूर्तिं तवानन्दसुधाप्रसूतिम् ।
विपश्चितश्चेतसि भावयन्ते
वेलामुदारामिव दुग्धसिन्धोः ॥ १३

मनोगतं पश्यति यः सदा त्वां
मनीषिणां मानसराजहंसम् ।
स्वयं पुरोभावविवादभाजः
किं कुर्वते तस्य गिरो यथार्हम् ॥ १४

अपि क्षणार्धं कलयन्ति ये त्वा-
माप्लावयन्तं विशदैर्मयूखैः ।
वाचां प्रवाहैरनिवारितैस्ते
मन्दाकिनीं मन्दयितुं क्षमन्ते ॥ १५

स्वामिन्भवद्ध्यानसुधाभिषेकात्
वहन्ति धन्याः पुलकानुबन्धम् ।
अलक्षिते क्वापि निरूढमूल-
मङ्गेष्विवानन्दथुमङ्कुरन्तम् ॥ १६

स्वामिन्प्रतीचा हृदयेन धन्या-
स्त्वद्ध्यानचन्द्रोदयवर्धमानम् ।
अमान्तमानन्दपयोधिमन्तः
पयोभिरक्ष्णां परिवाहयन्ति ॥ १७

स्वैरानुभावास्त्वदधीनभावाः
समृद्धवीर्यास्त्वदनुग्रहेण ।
विपश्चितो नाथ तरन्ति मायां
वैहारिकीं मोहन पिञ्छिकां ते ॥ १८

प्राङ्निर्मितानां तपसां विपाकाः
प्रत्यग्रनिःश्रेयससंपदो मे ।
समेधिषीरंस्तव पादपद्मे
संकल्पचिन्तामणयः प्रणामाः ॥ १९

विलुप्तमूर्धन्यलिपिक्रमाणां
सुरेन्द्रचूडापदलालितानाम् ।
त्वदङ्घ्रिराजीवरजःकणानां
भूयान्प्रसादो मयि नाथ भूयात् ॥ २०

परिस्फुरन्नूपुरचित्रभानु-
प्रकाशनिर्धूततमोनुषङ्गाम् ।
पदद्वयीं ते परिचिन्महेऽन्तः
प्रबोधराजीवविभातसंध्याम् ॥ २१

त्वत्किंकरालंकरणोचितानां
त्वयैव कल्पान्तरपालितानाम् ।
मञ्जुप्रणादं मणिनूपुरं ते
मञ्जूषिकां वेदगिरां प्रतीमः ॥ २२

संचिन्तयामि प्रतिभादशास्था-
न्संधुक्षयन्तं समयप्रदीपान् ।
विज्ञानकल्पद्रुमपल्लवाभं
व्याख्यानमुद्रामधुरं करं ते ॥ २३

चित्ते करोमि स्फुरिताक्षमालं
सव्येतरं नाथ करं त्वदीयम् ।
ज्ञानामृतोदञ्चनलम्पटानां
लीलाघटीयन्त्रमिवाश्रितानाम् ॥ २४

प्रबोधसिन्धोररुणैः प्रकाशैः
प्रवालसङ्घातमिवोद्वहन्तम् ।
विभावये देव सपुस्तकं ते
वामं करं दक्षिणमाश्रितानाम् ॥ २५

तमांसि भित्त्वा विशदैर्मयूखैः
सम्प्रीणयन्तं विदुषश्चकोरान् ।
निशामये त्वां नवपुण्डरीके
शरद्घने चन्द्रमिव स्फुरन्तम् ॥ २६

दिशन्तु मे देव सदा त्वदीयाः
दयातरङ्गानुचराः कटाक्षाः ।
श्रोत्रेषु पुंसाममृतं क्षरन्तीं
सरस्वतीं संश्रितकामधेनुम् ॥ २७

विशेषवित्पारिषदेषु नाथ
विदग्धगोष्ठीसमराङ्गणेषु ।
जिगीषतो मे कवितार्किकेन्द्रान्
जिह्वाग्रसिंहासनमभ्युपेयाः ॥ २८

त्वां चिन्तयंस्त्वन्मयतां प्रपन्नः
त्वामुद्गृणन् शब्दमयेन धाम्ना ।
स्वामिन्समाजेषु समेधिषीय
स्वच्छन्दवादाहवबद्धशूरः ॥ २९

नानाविधानामगतिः कलानां
न चापि तीर्थेषु कृतावतारः ।
ध्रुवं तवानाथपरिग्रहाया
नवं नवं पात्रमहं दयायाः ॥ ३०

अकम्पनीयान्यपनीतिभेदै-
रलंकृषीरन्हृदयं मदीयम् ।
शंङ्काकलङ्कापगमोज्ज्वलानि
तत्त्वानि सम्यञ्चि तव प्रसादात् ॥ ३१

व्याख्यामुद्रां करसरसिजैः पुस्तकं शङ्खचक्रे
बिभ्रद्भिन्नस्फटिकरुचिरे पुण्डरीके निषण्णः ।
अम्लानश्रीरमृतविशदैरंशुभिः प्लावयन्मा-
माविर्भूयादनघमहिमा मानसे वागधीशः ॥ ३२

वागर्थसिद्धिहेतोः
पठत हयग्रीवसंस्तुतिं भक्त्या ।
कवितार्किककेसरिणा
वेङ्कटनाथेन विरचितामेताम् ॥

—o—

॥ श्री ॥

# दशावतार स्तोत्रम् ।

श्रीमान्वेङ्कटनाथार्य कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्ता सदा हृदि ॥

देवो न शुभमातनोतु दशधा निर्वर्तयन्भूमिका
रङ्गे धामनि लब्धनिर्भररसैरध्यक्षितो भावुकै ।
यद्भावेषु पृथग्विधेष्वनुगुणान्भावान्स्वय बिभ्रती
यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका ॥ १

निर्मग्नश्रुतिजालमार्गणदशादत्तक्षणैर्वीक्षणै
रन्तस्तत्त्वदिवारविन्दगहनान्यौदन्वतीनामपाम् ।
निष्प्रत्यूहतरङ्गरिङ्खणमिथ प्रत्यूढपाथश्छटा
डोलारोहसदोहल भगवतो मात्स्य वपु पातु न ॥ २

अव्यासुर्भुवनत्रयीमनिभृत कण्डूयनैरद्रिणा
निद्राणस्य परस्य कूर्मवपुषो निश्वासवातोर्मय ।
यद्विक्षेपणसंस्कृतोदधिपय प्रेङ्खोलपर्यङ्किका
नित्यारोहणनिर्वृतो विहरते देव सहैव श्रिया ॥ ३

गोपायेदनिश जगन्ति कुहनापोत्री पवित्रीकृत
ब्रह्माण्ड प्रलयोर्मिघोषगुरुभिर्घोणारवैर्घुर्घुरै ।
यद्दंष्ट्राङ्कुरकोटिगाढघटनानिष्कम्पनित्यस्थिति
ब्रह्मस्तम्बमसौदसौ भगवती मुस्तेव विश्वम्भरा ॥ ४

प्रत्यादिष्टपुरातनप्रहरणग्राम क्षण पाणिजै
रव्यात्त्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरव ।
यत्प्रादुर्भवनादवन्ध्यजठरा यादृच्छिकाद्वेधसां
या काचित्सहसा महासुरगृहस्थूणा पितामह्यभूत् ॥ ५

व्रीडाविद्धवदान्यदानवयशोनासीरधाटीभट-
स्त्रैयक्षं मुकुटं पुनन्नवतु नस्त्रैविक्रमो विक्रमः ।
यत्प्रस्तावसमुच्छ्रितध्वजपटीवृत्तान्तसिद्धान्तिभिः
स्रोतोभिः सुरसिन्धुरष्टसु दिशासौधेषु दोधूयते ॥ ६

क्रोधाग्निं जमदग्निपीडनभवं संतर्पयिष्यन्क्रमा-
दक्षत्रामपि संततक्ष य इमां त्रिःसप्तकृत्वः क्षितिम् ।
दत्त्वा कर्मणि दक्षिणां क्वचन तामास्कन्द्य सिन्धुं वस-
न्नब्रह्मण्यमपाकरोतु भगवानाब्रह्मकीटं मुनिः ॥ ७

पारावारपयोविशोषणकलापारीणकालानल-
ज्वालाजालविहारहारिविशिखव्यापारघोरक्रमः ।
सर्वावस्थसकृत्प्रपन्नजनतासंरक्षणैकव्रती
धर्मो विग्रहवानधर्मविरतिं धन्वी स तन्वीत नः ॥ ८

फक्कत्कौरवपट्टणप्रभृतयः प्रास्तप्रलम्बादय-
स्तालाङ्कस्य तथाविधा विहृतयस्तन्वन्तु भद्राणि नः ।
क्षीरं शर्करयेव याभिरपृथग्भूताः प्रभूतैर्गुणै-
राकौमारकमस्वदन्त जगते कृष्णस्य ताः केलयः ॥ ९

नाथायैव नमःपदं भवतु नश्चित्रैश्चरित्रक्रमै-
र्भूयोभिर्भुवनान्यमूनि कुहनागोपाय गोपायते ।
कालिन्दीरसिकाय कालियफणिस्फारस्फटावाटिका-
रङ्गोत्सङ्गविशङ्कचंक्रमधुरापर्यायचर्यायते ॥ १०

भाविन्या दशया भवन्निह भवध्वंसाय नः कल्पतां
कल्की विष्णुयशस्सुतः कलिकथाकालुष्यकूलंकषः ।
निःशेषक्षतकण्टके क्षितितले धाराजलौघैर्ध्रुवं
धर्मं कार्तयुगं प्ररोहयति यन्निस्त्रिंशधाराधरः ॥ ११

इच्छामीन विहारकच्छप महापोत्रिन्यदृच्छाहरे
रक्षावामन रोषराम करुणाकाकुत्स्थ हेलाहलिन् ।
क्रीडावल्लव कल्कवाहनदशाकल्किन्निति प्रत्यहं
जल्पन्तः पुरुषाः पुनन्ति भुवनं पुण्यौघपण्यापणाः ॥ १२

विद्योदन्वति वेङ्कटेश्वरकवौ जातं जगन्मङ्गलं
देवेशस्य दशावतारविषयं स्तोत्रं विवक्षेत यः ।
वक्त्रे तस्य सरस्वती बहुमुखी भक्तिः परा मानसे
शुद्धिः कापि तनौ दिशासु दशसु ख्यातिः शुभा जृम्भते ॥१३

दशावतारस्तोत्रं संपूर्णम् ॥

— ० —

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

---

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

---

॥ श्रीः ॥

# भगवद्ध्यानसोपानम् ।

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।

वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

अन्तर्ज्योतिः किमपि यमिनामञ्जनं योगदृष्टे-

श्चिन्तारत्नं सुलभमिह नः सिद्धिमोक्षानुरूपम् ।

दीनानाथव्यसनशमनं दैवतं दैवतानां

दिव्यं चक्षुः श्रुतिपरिषदां दृश्यते रङ्गमध्ये ॥ १

वेलातीतश्रुतिपरिमलं वेधसां मौलिसेव्यं

प्रादुर्भूतं कनकसरितः सैकते हंसजुष्टे ।

लक्ष्मीभूम्योः करसरसिजैर्लालितं रङ्गभर्तुः

पादाम्भोजं प्रतिफलति मे भावनादीर्घिकायाम् ॥ २

चित्राकारां कटकरुचिभिश्चारुवृत्तानुपूर्वां

काले दृत्यद्रुततरगतिं कान्तिलीलाकलाचीम् ।

जानुच्छायाद्विगुणसुभगां रङ्गभर्तुर्मदात्मा

जङ्घां दृष्ट्वाजननपदवीजाङ्घिकत्वं जहाति ॥ ३

कामारामस्थिरकदलिकास्तम्भसंभावनीयं

क्षौमाश्लिष्टं किमपि कमलाभूमिनीलोपधानम् ।

न्यञ्चत्काञ्चीकिरणरुचिरं निर्विशत्यूरुयुग्मं

लावण्यौघद्वयमिव मतिर्मामिका रङ्गयूनः ॥ ४

संप्रीणाति प्रतिकलमसौ मानसं मे सुजाता

गम्भीरत्वात्क्वचन समये गूढनिक्षिप्तविश्वा ।

नालीकेन स्फुरितरजसा वेधसोनिर्मिमाणा

रम्यावर्तद्युतिसहचरी रङ्गनाथस्य नाभिः ॥ ५

श्रीवत्सेन प्रथितविभवं श्रीपदन्यासधन्यं
मध्यं बाह्वोर्मणिवररुचा रञ्जितं रङ्गधाम्नः ।
सान्द्रच्छायं तरुणतुलसीचित्रया वैजयन्त्या
संतापं मे शमयति धियश्चन्द्रिकोदारहारम् ॥ ६

एकं लीलोपहितमितरं बाहुमाजानुलम्बं
प्राप्ता रङ्गे शयितुरखिलप्रार्थनापारिजातम् ।
दृप्ता सेयं दृढनियमिता रश्मिभिर्भूषणानां
चिन्ताहस्तिन्यनुभवति मे चित्रमालानयन्त्रम् ॥ ७

साभिप्रायस्मितविकसितं चारुबिम्बाधरोष्ठं
दुःखापायप्रणयिनि जने दूरदत्ताभिमुख्यम् ।
कान्तं वक्त्रं कनकतिलकालंकृतं रङ्गभर्तुः
स्वान्ते गाढं मम विलगति स्वागतोदारनेत्रम् ॥ ८

माल्यैरन्तःस्थिरपरिमलैर्वल्लभास्पर्शमान्यैः
कुप्यच्चोलीवचनकुटिलैः कुन्तलैः श्लिष्टमूले ।
रत्नापीडद्युतिशबलिते रङ्गभर्तुः किरीटे
राजन्वत्यं स्थितिमधिगता वृत्तयश्चेतसो मे ॥ ९

पादाम्भोजं स्पृशति भजते रङ्गनाथस्य जङ्घा-
मूरुद्वन्द्वे विलगति शनैरूर्ध्वमभ्येति नाभिम् ।
वक्षस्यास्ते वलति भुजयोर्मामिकेयं मनीषा
वक्त्राभिख्यां पिबति वहते वासनां मौलिबन्धे ॥ १०

कान्तोदारैरयमिह भुजैः कङ्कणज्याकिणाङ्कै-
र्लक्ष्मीधाम्नः पृथुलपरिघैर्लक्षिताभीतिहेतिः ।
अग्रे किंचिद्भुजगशयनं स्वात्मनैवात्मनः सन्
मध्येरङ्गं मम च हृदये वर्तते सावरोधः ॥ ११

व्रजयोषिदपाङ्गवेधनीयं
मधुराभाग्यमनन्यभोग्यमीडे ।
वसुदेववधूस्तनंधयं त-
त्किमपि ब्रह्म किशोरभावदृश्यम् ॥ ६

परिवर्तितकंधरं भयेन
स्मितफुल्लाधरपल्लवं स्मरामि ।
विटपित्वनिरासकं कयोश्चि-
द्विपुलोलूखलकर्षकं कुमारम् ॥ ७

निकटेषु निशामयामि नित्यं
निगमान्तैरधुनापि मृग्यमाणम् ।
यमलार्जुनदृष्टबालकेलिं
यमुनासाक्षिकयौवनं युवानम् ॥ ८

पदवीमदवीमसीं विमुक्ते-
रटवीसंपदमम्बुवाहयन्तीम् ।
अरुणाधरसाभिलाषवंशां
करुणां कारणमानुषीं भजामि ॥ ९

अनिमेषनिषेवणीयमक्ष्णो-
रजहद्यौवनमाविरस्तु चित्ते ।
कलहायितकुन्तलं कलापैः
करणोन्मादकविभ्रमं महो मे ॥ १०

[illegible] मनोज्ञवंशनालै
[illegible]र्शितवल्लवीविमोहैः ।
[illegible]गीतलैरसौ मा-
[illegible]सरिदम्बुजैरपाङ्गैः ॥ ११

॥ श्रीः ॥

# गोपालविंशतिः

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

वन्दे बृन्दावनचरं वल्लवीजनवल्लभम् ।
जयन्तीसम्भवं धाम वैजयन्तीविभूषणम् ॥ १

वाचं निजाङ्करसिकां प्रसमीक्षमाणो
वक्त्रारविन्दविनिवेशितपाञ्चजन्यः ।
वर्णत्रिकोणरुचिरे वरपुण्डरीके
बद्धासनो जयति वल्लवचक्रवर्ती ॥ २

आम्नायगन्धिरुदितस्फुरिताधरोष्ठ-
मास्राविलेक्षणमनुक्षणमन्दहासम् ।
गोपालडिम्भवपुषं कुहनाजनन्याः
प्राणस्तनन्धयमवैमि परं पुमांसम् ॥ ३

आविर्भवत्वनिभृताभरणं पुरस्ता-
दाकुञ्चितैकचरणं निभृतान्यपादम् ।
दध्ना निमन्थमुखरेण निबद्धतालं
नाथस्य नन्दभवने नवनीतनाट्यम् ॥ ४

हर्तुं कुम्भे विनिहितकरः स्वादु हैयङ्गवीनं
दृष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम् ।
पायादीषत्प्रचलितपदो नापगच्छन्न तिष्ठन्
मिथ्यागोपः सपदि नयने मीलयन्विश्वगोप्ता ॥ ५

व्रजयोषिदपाङ्गवेधनीय
मधुराभाग्यमनन्यभोग्यमीडे ।
वसुदेववधूस्तनंधयं त-
त्किमपि ब्रह्म किशोरभावदृश्यम् ॥ ६

परिवर्तितकंधरं भयेन
स्मितफुल्लाधरपल्लवं स्मरामि ।
विटपित्वनिरासकं कयोश्चि-
द्विपुलोलूखलकर्षकं कुमारम् ॥ ७

निकटेषु निशामयामि नित्यं
निगमान्तैरधुनापि मृग्यमाणम् ।
यमलार्जुनदृष्टबालकेलिं
यमुनासाक्षिकयौवनं युवानम् ॥ ८

पदवीमदवीयसीं विमुक्ते-
रटवीसंपदमम्बुवाहयन्तीम् ।
अरुणाधरसाभिलाषवंशां
करुणां कारणमानुषीं भजामि ॥ ९

अनिमेषनिषेवणीयमक्ष्णो-
रजहद्यौवनमाविरस्तु चित्ते ।
कलहायितकुन्तलं कलापैः
करणोन्मादकविभ्रमं महो मे ॥ १०

अनुयायि मनोज्ञवंशनालै-
रवतु स्पर्शितवल्लवीविमोहैः ।
अनघस्मितशीतलैरसौ मा-
मनुकम्पासरिदम्बुजैरपाङ्गैः ॥ ११

अधराहितचारुवंशनाला
मुकुटालम्बिमयूरपिञ्छमालाः ।
हरिनीलशिलाविभङ्गनीलाः
प्रतिभाः सन्तु ममान्तिमप्रयाणे ॥ १२

अखिलानवलोकयामि काला-
न्महिलाधीनभुजान्तरस्य यूनः ।
अभिलाषपदं व्रजाङ्गनाना-
मभिलापक्रमदूरमाभिरूप्यम् ॥ १३

हृदि मुग्धशिखण्डमण्डनो
लिखितः केन ममैष शिल्पिना ।
मदनातुरवल्लवाङ्गना-
वदनाम्भोजदिवाकरो युवा ॥ १४

महसे महिताय मौलिना
विनतेनाञ्जलिमञ्जनत्विषे ।
कलयामि विमुग्धवल्लवी-
वलयाभाषितमञ्जुवेणवे ॥ १५

जयति ललितवृत्तिं शिक्षितो वल्लवीनां
शिथिलवलयशिञ्जाशीतलैर्हस्ततालैः ।
अखिलभुवनरक्षागोपवेषस्य विष्णो-
रधरमणिसुधायामंशवान्वंशनालः ॥ १६

चित्राकल्पः श्रवसि कलयल्लाङ्गलीकर्णपूरं
बर्होत्तंसस्फुरितचिकुरो बन्धुजीवं दधानः ।
गुञ्जाबद्धामुरसि ललितां धारयन्हारयष्टिं
गोपस्त्रीणां जयति कितवः कोऽपि कौमारहारी ॥ १७

लीलायष्टिं करकिसलये दक्षिणे न्यस्य धन्या-
मंसे देव्याः पुलकरुचिरे संनिविष्टान्यबाहुः ।
मेघश्यामो जयति ललितो मेखलादत्तवेणु-
र्गुञ्जापीडस्फुरितचिकुरो गोपकन्याभुजंगः ॥१८

प्रत्यालीढस्थितिमधिगतां प्राप्तगाढाङ्कपालिं
पश्चादीषन्मिलितनयनां प्रेयसीं प्रेक्षमाणः ।
भस्त्रायन्त्रप्रणिहितकरो भक्तजीवातुरव्या-
द्वारिक्रीडानिबिडवसनो वल्लवीवल्लभो नः ॥१६

वासो हृत्वा दिनकरसुतासंनिधौ वल्लवीनां
लीलास्मेरो जयति ललितामास्थितः कुन्दशाखाम् ।
सव्रीडाभिस्तदनु वसने ताभिरभ्यर्थ्यमाने
कामी कश्चित्करकमलयोरञ्जलिं याचमानः ॥ २०

इत्यनन्यमनसा विनिर्मिता
वेङ्कटेशकविना स्तुतिं पठन् ।
दिव्यवेणुरसिकं समीक्षते
दैवतं किमपि यौवतप्रियम् ॥ २१

॥ गोपालविंशतिः संपूर्णा ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

॥ श्री ॥

# श्रीस्तुतिः

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

मानातीतप्रथितविभवा मङ्गल मङ्गलाना
वक्ष पीठीं मधुविजयिनो भूषयन्ती स्वकान्त्या ।
प्रत्यक्षानुश्रविकमहिमप्रार्थिनीना प्रजाना
श्रेयोमूर्तिं श्रियमशरणस्त्वा शरण्या प्रपद्ये ॥ १

आविर्भाव कलशजलधावध्वरे वापि यस्या
स्थान यस्या सरसिजवन विष्णुवक्षःस्थल वा ।
भूमा यस्या भुवनमखिल देवि दिव्य पद वा
स्तोकप्रज्ञैरनवधिगुणा स्तूयसे सा कथ त्वम् ॥ २

स्तोतव्यत्व दिशति भवती देहिभि स्तूयमाना
तामेव त्वामनितरगति स्तोतुमाशसमानः ।
सिद्धारम्भ सकलभुवनश्लाघनीयो भवेय
सेवापेक्षा तव चरणयो श्रेयसे कस्य न स्यात् ॥ ४

यत्सकल्पाद्भवति कमले यत्र देहिन्यमीषा
जन्मस्थेमप्रलयरचना जङ्गमाजङ्गमानाम् ।
तत्कल्याण किमपि यमिनामेकलक्ष्य समाधौ
पूर्ण तेजः स्फुरति भवतीपादलाक्षारसाङ्कम् ॥ ५

निष्प्रत्यूहप्रणयघटित देवि नित्यानपाय
विष्णुस्त्व चेत्यनवधिगुण द्वन्द्वमन्योन्यलक्ष्यम् ।
शेषश्चित्त विमलमनसा मौलयश्च श्रुतीनां
संपद्यन्ते विहरणविधौ यस्य शय्याविशेषाः ॥ ६

उद्देश्यत्वं जननि भजतोरुज्झितोपाधिगन्धं
प्रत्यग्रूपे हविषि युवयोरेकशेषित्वयोगात् ।
पद्मे पत्युस्तव च निगमैर्नित्यमन्विष्यमाणो
नावच्छेदं भजति महिमा नर्तयन्मानसं नः ॥ ७

पश्यन्तीषु श्रुतिषु परितः सूरिवृन्देन सार्धं
मध्येकृत्य त्रिगुणफलकं निर्मितस्थानभेदम् ।
विश्वाधीशप्रणयिनि सदा विभ्रमद्यूतवृत्तौ
ब्रह्मेशाद्या दधति युवयोरक्षशारप्रचारम् ॥ ८

अस्येशाना त्वमसि जगतः संश्रयन्ती मुकुन्दं
लक्ष्मीः पद्मा जलधितनया विष्णुपत्नीन्दिरेति ।
यन्नामानि श्रुतिपरिपणान्येवमावर्तयन्तो
नावर्तन्ते दुरितपवनप्रेरिते जन्मचक्रे ॥ ९

त्वामेवाहुः कतिचिदपरे त्वत्प्रियं लोकनाथं
किं तैरन्तःकलहमलिनैः किंचिदुत्तीर्य मग्नैः ।
त्वत्संप्रीत्यै विहरति हरौ संमुखीनां श्रुतीनां
भावारूढौ भगवति युवां दंपती दैवतं नः ॥ १०

आपन्नार्तिप्रशमनविधौ बद्धदीक्षस्य विष्णो-
राचख्युस्त्वां प्रियसहचरीमैकमत्योपपन्नाम् ।
प्रादुर्भावैरपि समतनुः प्राध्वमन्वीयसे त्वं
दूरोत्क्षिप्तैरिव मधुरता दुग्धराशेस्तरङ्गैः ॥ ११

धत्ते शोभां हरिमरकते तावकी मूर्तिराद्या
तन्वी तुङ्गस्तनभरनता तप्तजाम्बूनदाभा ।
यस्या गच्छन्त्युदयविलयैर्नित्यमानन्दसिन्धा-
विच्छावेगोल्लसितलहरीविभ्रमं व्यक्तयस्ते ॥ १२

आससार विततमखिल वाङ्मयं यद्विभूति-
यद्भ्रू भङ्गात्कुसुमधनुष किङ्करो मेरुधन्वा ।
यस्यां नित्यं नयनशतकैरेकलक्ष्यो महेन्द्र
पद्मे तासा परिणतिरसौ भावलेशैस्त्वदीयै ॥ १३

अग्रे भर्तु सरसिजमये भद्रपीठे निषण्णा-
मम्भोराशेरधिगतसुधासम्प्लवादुत्थिता त्वाम् ।
पुष्पासारस्थगितभुवनै पुष्कलावर्तकाद्यै
क्लृप्तारम्भा कनककलशैरभ्यषिञ्चन्गजेन्द्रा ॥ १४

आलोक्य त्वाममृतसहजे विष्णुवक्ष स्थलस्था
शापाक्रान्ता शरणमगमन्सावरोधा सुरेन्द्रा ।
लब्ध्वा भूयस्त्रिभुवनमिद लक्षित त्वत्कटाक्षै
सर्वाकारस्थिरसमुदया सपद निर्विशन्ति ॥ १५

आर्तत्राणव्रतिभिरमृतासारनीलाम्बुवाहै
रम्भोजानामुषसि मुषतामन्तरङ्गैरपाङ्गै ।
यस्या यस्या दिशि विहरते देवि दृष्टिस्त्वदीया
तस्या तस्यामहमहमिका तन्वते सपदोघा ॥ १६

योगारम्भत्वरितमनसो युष्मदैकान्त्ययुक्त
धर्मं प्राप्तु प्रथममिह ये धारयन्ते धनायाम् ।
तेषां भूमेर्धनपतिगृहादम्बरादम्बुधेर्वा
धारा निर्यान्त्यधिकमधिक वाञ्छिताना वसूनाम् ॥१७

श्रेयस्कामा कमलनिलये चित्रमाम्नायवाचां
चूडापीड तव पदयुग चेतसा धारयन्त ।
छत्रच्छायासुभगशिरसश्चामरस्मेरपार्श्वा
श्लाघाशब्दश्रवणमुदिता स्रग्विणः सचरन्ति ॥ १८

॥ श्रीः ॥

# गोदास्तुतिः

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

श्रीविष्णुचित्तकुलनन्दनकल्पवल्लीं
श्रीरङ्गराजहरिचन्दनयोगदृश्याम् ।
साक्षात्क्षमां करुणया कमलामिवान्यां
गोदामनन्यशरणः शरणं प्रपद्ये ॥ १

वैदेशिकः श्रुतिगिरामपि भूयसीनां
वर्णेषु माति महिमा नहि मादृशां ते ।
इत्थं विदन्तमपि मां सहसैव गोदे
मौनद्रुहो मुखरयन्ति गुणास्त्वदीयाः ॥ २

त्वत्प्रेयसः श्रवणयोरमृतायमानां
तुल्यां त्वदीयमणिनूपुरशिञ्जितानाम् ।
गोदे त्वमेव जननि त्वदभीष्टवार्हां

कल्याणानामविकलनिधिः कापि कारुण्यसीमा
नित्यामोदा निगमवचसां मौलिमन्दारमाला ।
सम्पद्दिव्या मधुविजयिनः संनिधत्तां सदा मे
सैषा देवी सकलभुवनप्रार्थनाकामधेनुः ॥ २५

उपचितगुरुभक्तेरुत्थितं वेङ्कटेशा-
त्कलिकलुषनिवृत्त्यै कल्पमानं प्रजानाम् ।
सरसिजनिलयायाः स्तोत्रमेतत्पठन्तः
सकलकुशलसीमाः सार्वभौमा भवन्ति ॥ २६

---

॥ श्रीस्तुतिः संपूर्णा ॥

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

१६

॥ श्रीः ॥

# गोदास्तुतिः

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्ता सदा हृदि ॥

श्रीविष्णुचित्तकुलनन्दनकल्पवल्लीं
श्रीरङ्गराजहरिचन्दनयोगदृश्याम् ।
साक्षात्क्षमां करुणया कमलामिवान्यां
गोदामनन्यशरणः शरणं प्रपद्ये ॥ १

वैदेशिकः श्रुतिगिरामपि भूयसीनां
वर्णेषु माति महिमा नहि मादृशां ते ।
इत्थं विदन्तमपि मां सहसैव गोदे
मौनद्रुहो मुखरयन्ति गुणास्त्वदीयाः ॥ २

त्वत्प्रेयसः श्रवणयोरमृतायमानां
तुल्यां त्वदीयमणिनूपुरशिञ्जितानाम् ।
गोदे त्वमेव जननि त्वदभीष्टवार्हां
वाचं प्रसन्नमधुरां मम संविधेयाः ॥ ३

कृष्णान्वयेन दधतीं यमुनानुभावं
तीर्थैर्यथावदवगाह्य सरस्वतीं ते ।
गोदे विकस्वरधियां भवतीकटाक्षा-
द्वाचः स्फुरन्ति मकरन्दमुचः कवीनाम् ॥ ४

अस्मादृशामपकृतौ चिरदीक्षिताना-
मह्नाय देवि दयते यदसौ मुकुन्दः ।
तन्निश्चितं नियमितस्तव मौलिदाम्ना
तन्त्रीनिनादमधुरैश्च गिरां निगुम्भैः ॥ ५

शोणाधरेऽपि कुचयोरपि तुङ्गभद्रा
वाचां प्रवाहनिवहेऽपि सरस्वती त्वम् ।
अप्राकृतैरपि रसैर्विरजा स्वभावात्
गोदापि देवि कमितुर्ननु नर्मदासि ॥ ६

वल्मीकतः श्रवणतो वसुधात्मनस्ते
जातो बभूव स मुनिः कविसार्वभौमः ।
गोदे किमद्भुतमिदं यदमी स्वदन्ते
वक्त्रारविन्दमकरन्दनिभाः प्रबन्धाः ॥ ७

भोक्तुं तव प्रियतमं भवतीव गोदे
भक्तिं निजां प्रणयभावनया गृणन्तः ।
उच्चावचैर्विरहसंगमजैरुदन्तैः
शृङ्गारयन्ति हृदयं गुरवस्त्वदीयाः ॥ ८

मातः समुत्थितवतीमधिविष्णुचित्तं
विश्वोपजीव्यममृतं वचसा दुहानाम् ।
तापच्छिदं हिमरुचेरिव मूर्तिमन्यां
सन्तः पयोधिदुहितुः सहजां विदुस्त्वाम् ॥ ९

तातस्तु ते मधुभिदः स्तुतिलेशवश्यात्
कर्णामृतैः स्तुतिशतैरनवाप्तपूर्वम् ।
त्वन्मौलिगन्धसुभगामुपहृत्य मालां
लेभे महत्तरपदानुगुणं प्रसादम् ॥ १०

दिग्दक्षिणापि परिपक्त्रिमपुण्यलभ्यात्
सर्वोत्तरा भवति देवि तवावतारात् ।
यत्रैव रङ्गपतिना बहुमानपूर्वं
निद्रालुनापि नियतं निहिता कटाक्षाः ॥ ११

प्रायेण देवि भवतीव्यपदेशयोगात्
गोदावरी जगदिदं पयसा पुनीते ।
यस्यां समेत्य समयेषु चिरं निवासात्
भागीरथीप्रभृतयोऽपि भवन्ति पुण्याः ॥ १२

नागेशयः सुतनु पक्षिरथः कथं ते
जातः स्वयंवरपतिः पुरुषः पुराणः
एवंविधाः समुचितं प्रणयं भवत्याः
संदर्शयन्ति परिहासगिरः सखीनाम् ॥ १३

त्वद्भुक्तमाल्यसुरभीकृतचारुमौले-
र्हित्वा भुजान्तरगतामपि वैजयन्तीम् ।
पत्युस्तवेश्वरि मिथः प्रतिघातलोला
बर्हातपत्ररुचिमारचयन्ति भृङ्गाः ॥ १४

आमोदवत्यपि सदा हृदयङ्गमापि
रागान्वितापि ललितापि गुणोत्तरापि ।
मौलिस्रजा तव मुकुन्दकिरीटभाजा
गोदे भवत्यधरिता खलु वैजयन्ती ॥ १५

त्वन्मौलिदामनि विभोः शिरसा गृहीते
स्वच्छन्दकल्पितसपीतिरसप्रमोदाः ।
मञ्जुस्वना मधुलिहो विदधुः स्वयं ते
स्वायम्वरं कमपि मङ्गलतूर्यघोषम् ॥ १६

विश्वायमानरजसा कमलेन नाभौ
वक्षःस्थले च कमलास्तनचन्दनेन ।
आमोदितोऽपि निगमैर्विभुरङ्घ्रियुग्मे
धत्ते नतेन शिरसा तव मौलिमालाम् ।

चूडापदेन परिगृह्य तवोत्तरीयं
मालामपि त्वदलकैरधिवास्य दत्ताम् ।
प्रायेण रङ्गपतिरेष बिभर्ति गोदे
सौभाग्यसंपदभिषेकमहाधिकारम् ॥ १८

तुङ्गैरकृत्रिमगिरः स्वयमुत्तमाङ्गै-
र्यं सर्वगन्ध इति सादरमुद्वहन्ति ।
आमोदमन्यमधिगच्छति मालिकाभिः
सोऽपि त्वदीयकुटिलालकवासिताभिः ॥ १९

धन्ये समस्तजगतां पितुरुत्तमाङ्गे
त्वन्मौलिमाल्यभरसंभरणेन भूयः ।
इन्दीवरस्रजमिवादधति त्वदीया-
न्याकेकराणि बहुमानविलोकितानि ॥ २०

रङ्गेश्वरस्य तव च प्रणयानुबन्धा-
दन्योन्यमाल्यपरिवृत्तिमभिष्टुवन्तः ।
वाचालयन्ति वसुधे रसिकास्त्रिलोकीं
न्यूनाधिकत्वसमताविषयैर्विवादैः ॥ २१

दूर्वादलप्रतिमया तव देवि कान्त्या
गोरोचनारुचिरया च रुचेन्दिरायाः ।
आसीदनुज्झितशिखावलकण्ठशोभं
माङ्गल्यदं प्रणमतां मधुवैरिगात्रम् ॥ २२

अर्च्यं समर्च्य नियमैर्निगमप्रसूनै-
र्नाथं त्वया कमलया च समेयिवांसम् ।
मातश्चिरं निरविशन्निजमाधिराज्यं
मान्या मनुप्रभृतयोऽपि महीक्षितस्ते ॥ २३

आर्द्रापराधिनि जनेऽप्यभिरक्षणार्थं
रङ्गेश्वरस्य रमया विनिवेद्यमाने ।
पार्श्वे परत्र भवती यदि तत्र नासीत्
प्रायेण देवि वदनं परिवर्तितं स्यात् ॥ २४

गोदे गुणैरपनयन्प्रणतापराधान्
भ्रूक्षेप एव तव भोगरसानुकूलः ।
कर्मानुबन्धिफलदानरतस्य भर्तुः
स्वातन्त्र्यदुर्व्यसनमर्मभिदानिदानम् ॥ २५

रङ्गे तटिद्गुणवतो रमयैव गोदे
कृष्णाम्बुदस्य घटितां कृपया सुवृष्ट्या ।
दौर्गत्यदुर्विषविनाशसुधानदीं त्वां
सन्तः प्रपद्य शमयन्त्यचिरेण तापान् ॥ २६

जातापराधमपि मामनुकम्प्य गोदे
गोप्त्री यदि त्वमसि युक्तमिदं भवत्याः ।
वात्सल्यनिर्भरतया जननी कुमारं
स्तन्येन वर्धयति दष्टपयोधरापि ॥ २७

शतमखमणिनीला चारुकल्हारहस्ता
स्तनभरनमिताङ्गी सान्द्रवात्सल्यसिन्धुः ।
अलकविनिहिताभिः स्रग्भिराकृष्टनाथा
विलसतु हृदि गोदा विष्णुचित्तात्मजा नः ॥ २८

इति विकसितभक्तेरुत्थितां वेङ्कटेशात्
　बहुगुणरमणीया वक्ति गोदास्तुतिं यः ।
स भवति बहुमान्यः श्रीमतो रङ्गभर्तु-
　श्चरणकमलसेवां शाश्वतीमभ्युपैष्यन् ॥　२९

॥ गोदास्तुतिः सम्पूर्णा ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥



भूतेषु यत्त्वदभिमानविशेषपात्रं
पोषं तदेव भजतीति विभावयन्तः ।
भूतं प्रभूतगुणपञ्चकमाद्यमेव
प्रायो निदर्शनतया प्रतिपादयन्ति ॥ १२

कान्तस्तवैष करुणाजलधिः प्रजाना-
माज्ञातिलङ्घनवशादुपजातरोषः ।
अह्नाय विश्वजननि क्षमया भवत्या
सर्वावगाहनसहामुपयात्यवस्थाम् ॥ १३

आश्वासनाय जगतां पुरुषे परस्मि-
न्नापन्नरक्षणदशामभिनेतुकामे ।
अन्तर्हितेतरगुणाद्बलास्वभावा-
दौदन्वते पयसि मज्जनमभ्यनैषीः ॥ १४

पूर्वं वराहवपुषा पुरुषोत्तमेन
प्रीतेन भोगिसदने समुदीक्षितायाः ।
पादाहताः प्रलयवारिधयस्तवास-
न्नुद्वाहमङ्गलविधेरुचिता मृदङ्गाः ॥ १५

व्योमातिलङ्घिनि विभोः प्रलयाम्बुराशौ
वेशन्तलेश इव मातुमशक्यमूर्तेः ।

सर्वंसहेत्यवनिरित्यचलेति मात
विश्वम्भरेति विपुलेति वसुन्धरेति ।
अन्यानि चान्यविमुखान्यभिधानवृत्त्या
नामान्यमूनि कथयन्ति तवानुभावम् ॥ ६

तापान्क्षिपन्प्रसविता सुमनोगणाना
प्रच्छायशीतलतल प्रदिशन्फलानि ।
त्वत्सगमाद्भवति माधवि लब्धपोष'
शाखाशतैरधिगतो हरिचन्दनोऽसौ ॥ ७

स्मेरेण वर्धितरसस्य मुखेन्दुना ते
निस्पन्दता विजहतो निजया प्रकृत्या ।
विश्रान्तिभूमिरसि तत्त्वतरङ्गपङ्क्ते-
र्वेलेव विष्णुजलधेरपृथग्भवन्ती ॥ ८

स्वभाविके वसुमति श्रुतिभिर्विभाव्ये
पत्युर्महिम्नि भवतीं प्रतिपन्नवासाम् ।
शङ्के विमानवहनप्रतिमासमाना
स्तम्बेरमप्रभृतयोऽपि वहन्ति सत्वा ॥ ९

सभावयन्मधुरिपु प्रणयानुरोधा-
द्वक्ष स्थलेन वरुणालयराजकन्याम् ।
विश्वम्भरे बहुमुखप्रतिपन्नभोग
शेषात्मना तु भवतीं शिरसा दधाति ॥ १०

क्रीडावराहदयिते कृतिन क्षितीन्द्रा'
सक्रन्दनस्तदितरेऽपिदिशामधीशा ।
आमोदयन्ति भुवनान्यलिकाश्रिताना
मम्ब त्वदङ्घ्रिरजसा परिणामभेदै ॥ ११

भूतेषु यत्त्वदभिमानविशेषपात्रं
पोषं तदेव भजतीति विभावयन्तः ।
भूतं प्रभूतगुणपञ्चकमाद्यमेव
प्रायो निदर्शनतया प्रतिपादयन्ति ॥ १२

कान्तस्तवैष करुणाजलधिः प्रजाना-
माज्ञातिलङ्घनवशादुपजातरोषः ।
अह्नाय विश्वजननि क्षमया भवत्या
सर्वावगाहनसहामुपयात्यवस्थाम् ॥ १३

आश्वासनाय जगतां पुरुषे परस्मि-
न्नापन्नरक्षणदशामभिनेतुकामे ।
अन्तर्हितेतरगुणादबलास्वभावा-
दौदन्वते पयसि मज्जनमभ्यनैषीः ॥ १४

पूर्वं वराहवपुषा पुरुषोत्तमेन
प्रीतेन भोगिसदने समुदीक्षितायाः ।
पादाहताः प्रलयवारिधयस्तवास-
न्नुद्वाहमङ्गलविधेरुचिता मृदङ्गाः ॥ १५

व्योमातिलङ्घिनि विभोः प्रलयाम्बुराशौ
वेशन्तलेश इव मातुमशक्यमूर्तेः ।
सद्यः समुद्रवसने सरसैरकार्षी-
रानन्दसागरमपारमपाङ्गपातैः ॥ १६

दंष्ट्राविदारितमहासुरशोणिताङ्कै-
रङ्गैः प्रियस्तव दधे परिरम्भलीलाम् ।
सा ते पयोधिजलकेलिसमुत्थितायाः
सैरन्ध्रिकेव विदधे नवमङ्गरागम् ॥ १७

अन्योन्यसंवलनजृम्भिततूर्यघोषै
संवर्तसिन्धुसलिलैर्विहिताभिषेका ।
एकातपत्रयसि विश्वमिदं गुणै स्वै
रथ्यास्य भर्तुरधिकोन्नतमसपीठम् ॥ १८

भर्तुस्तमालरुचिरे भुजमध्यभागे
पर्यायमौक्तिकवती पृषतै पयोधे ।
तापानुबन्धशमनी जगतां त्रयाणां
तारापथे स्फुरसि तारकिता निशेव ॥ १९

आसक्तवासवशरासनपल्लवैस्त्वां
सपक्षये शुभतटिद्गुणजालरम्यै ।
देवेशदिव्यमहिषीं धृतसिन्धुतोयै
र्जीमूतरत्नकलशैरभिषिञ्चति द्यौ ॥ २०

आविर्मदैरमरदन्तिभिरुह्यमाना
रत्नाकरेण रुचिरा रशनागुणेन ।
मातस्त्रिलोकजननीं वनमालिनीं त्वां
मायावराहमहिषीमवयन्ति सन्त ॥ २१

निष्कण्टकप्रशमयोगनिषेवणीया
छाया विशेषपरिभूतसमस्ततापाम् ।
स्वर्गापवर्गसरणिं भवतीमुशन्ति
स्वच्छन्दसूकरवधूमवधूतपङ्काम् ॥ २२

गण्डोज्ज्वला गहनकुन्तलदर्शनीयां
शैलस्तनीं तरलनिर्झरलम्बहाराम् ।
श्यामां स्वतस्त्रियुगसूकरगेहिनि त्वं
व्यक्तिं समुद्रवसनामुभयीं बिभर्षि ॥ २३

निःसंशयैर्निगमसीमनि विष्णुपत्नि
 प्रख्यापितं भृगुमुखैर्मुनिभिः प्रतीतैः ।
पश्यन्त्यनन्यपरधीरससंस्तुतेन
 सन्तः समाधिनयनेन तवानुभावम् ॥ २४

संचोदिता करुणया चतुरः पुमर्था-
 न्व्यातन्वती विविधमन्त्रगणोपगीता ।
संचिन्त्यसे वसुमति स्थिरभक्तिबन्धै-
 रन्तर्बहिश्च बहुधा प्रणिधानदक्षैः ॥ २५

क्रीडागृहीतकमलादिविशेषचिह्नां
 विश्राणिताभयवरां वसुधे सभूतिम् ।
दौर्गत्यदुर्विषविनाशसुधानदीं त्वां
 संचिन्तयन् हि लभते धनदाधिकारान् ॥ २६

उद्वेलकल्मषपरंपरितादमर्षा-
 दुत्तंसितेन हरिमञ्जलिनाप्यधृष्यम् ।
आकस्मिकोऽयमधिगम्यपतिप्रजाना-
 मम्ब त्वदीयकरुणापरिणाम एव ॥ २७

प्रत्येकमब्दनियुतैरपि दुर्व्यपोहा-
 त्प्राप्ते विपाकसमये जनितानुतापात् ।
नित्यापराधनिवहाच्चकितस्य जन्तो-
 र्गन्तुं मुकुन्दचरणौ शरणं क्षमे त्वम् ॥ २८

त्राणाभिसंधिसुभगेऽपि सदा मुकुन्दे
 संसारतन्त्रवहनेन विलम्बमाने ।
रक्षाविधौ तनुभृतामनघानुकम्पा
 मातः स्वयं वितनुषे महतीमपेक्षाम् ॥ २९

धर्मद्रुहं सकलदुष्कृतिसार्वभौम-
मात्मानभिज्ञमनुतापलवोज्झितं माम् ।
वैतानसूकरपतेश्चरणारविन्दे
सर्वंसहे ननु समर्पयितुं क्षमा त्वम् ॥ ३०

तापत्रयीं निरवधिं मरतीं दयार्द्रा
संसारघर्मजनितां सपदि क्षिपन्तः ।
मातर्भजन्तु मधुरामृतवर्षमैत्री
मायावराहदयिते मयि ते कटाक्षाः ॥ ३१

पत्युर्दक्षिणपाणिपङ्कजपुटे विन्यस्तपादाम्बुजा
वामं पन्नगसार्वभौमसदृशं पर्यङ्कयन्ती भुजम् ।
पोत्रस्पर्शलसत्कपोलफलका फुल्लारविन्देक्षणा
सा मे पुष्यतु मङ्गलान्यनुदिनं सर्वाणि सर्वंसहा ॥ ३२

अस्येशाना जगत इति या श्रूयते विष्णुपत्नी
तस्याः स्तोत्रं विरचितमिदं वेङ्कटेशेन भक्त्या ।
श्रद्धाभक्तिप्रचयगुरुणा चेतसा संस्तुवानो
यद्यत्कामं सपदि लभते तत्र तत्र प्रतिष्ठाम् ॥ ३३

---

भूस्तुतिः संपूर्णा

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

# अथ नारायणाष्टकम् ।

वात्सल्यादभयप्रदानसमयादार्त्तार्तिनिर्व्वापणा-
दौदार्य्यादघशोषणादगणितश्रेयःपदप्रापणात् ॥
सेव्यः श्रीपतिरेकएव जगतामेतेऽभवन्त्साक्षिणः
प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्या ध्रुवः ॥ १

प्रह्लादास्ति यदीश्वरो वद हरिः सर्वत्र मे दर्शय
स्तम्भे चैवमिति ब्रुवन्तमसुरं तत्राविरासीद्धरिः ॥
वक्षस्तस्य विदारयन्निजनखैर्वात्सल्यमापादय-
न्नार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ २

श्रीरामोऽत्र विभीषणोऽयमनघो रक्षोभयादागतः
सुग्रीवानय पालयैनमधुना पौलस्त्यमेवागतम् ॥
इत्युक्त्वाऽभयमस्य सर्वविदितं यो राघवो दत्तवा-
नार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३

नक्रग्रस्तपदं समुद्धृतकरं ब्रह्मादयो भोस्सुराः
रक्षन्तामिति दीनवाक्यकरिणं देवेष्वशक्तेषु यः ॥
मा भैषीरिति तस्य नक्रहनने चक्रायुधः श्रीधरो
ह्यार्तत्राणपरायणः स भगवान्नाराणो मे गतिः ॥ ४

भोः कृष्णाच्युत भोः कृपालय हरे भोः पाण्डवानां सखे
क्वासि क्वासि सुयोधनाद्यपहृतां भो रक्ष मामातुराम् ॥
इत्युक्तोऽक्षयवस्त्रसंभृततनुं योऽपालद्द्रौपदी-
मार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ५

यत्पादाब्जनखोदकं त्रिजगतां पापौघविध्वंसनं
यन्नामामृतपूरकं च पिबतां संसारसन्तारकम् ॥
पाषाणोऽपि यदङ्घ्रिपद्मरजसा शापान्मुनेर्मोचितो
ह्यार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ६

पित्रा भ्रातरमुत्तमासनगतं ह्यौत्तानपादिर्ध्रुवो
दृष्ट्वा तत्सममारुरुक्षुरधिकं मात्राऽवमानं गतः ॥
यं गत्वा शरणं यदाप तपसा हेमाद्रिसिंहासनं
ह्यार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ७

कावेरीहृद्याभिरामपुलिने पुण्ये जगन्मङ्गले
चन्द्राम्भोजवतीतटे परिसरे धात्रा समाराधिते ॥
श्रीरङ्गे भुजगेन्द्रभोगशयने शेते सदा यः पुमान्
नार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ८

आर्ता विषण्णाः शिथिलाश्च भीता
घोरेषु च व्याधिषु वर्तमानाः ॥
संकीर्त्य नारायणशब्दमात्रं
विमुक्तदुःखाः सुखिनो भवन्ति ॥ ९

इति श्रीकूरेशस्वामिविरचितं नारायणाष्टकं सम्पूर्णम् ॥ ८

—o—

# अथ सुदर्शनाष्टकम् ।

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।

वेदान्ताचार्यवर्यो मे सन्निधत्ता सदा हृदि ॥

प्रतिभटश्रेणिभीषण वरगुणस्तोमभूषण
जनिभयस्थानतारण जगदवस्थानकारण ।
निखिलदुष्कर्मकर्शन निगमसद्धर्मदर्शन ।
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ १

शुभजगद्रूपमण्डन सुरगणत्रासखण्डन
शतमखब्रह्मवन्दित शतपथब्रह्मनन्दित ।
प्रथितविद्वत्सपक्षित भजदहिर्बुध्न्यलक्षित
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ २

स्फुटतटिज्जालपिञ्जर पृथुतरज्वालपञ्जर
परिगतप्रत्नविग्रह पटुतरप्रज्ञदुर्ग्रह ।
प्रहरणग्राममण्डित परिजनत्राणपण्डित
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ ३

निजपदप्रीतसद्गण निरुपधिस्फीतषड्गुण
निगमनिर्व्यूढवैभव निजपरव्यूहवैभव ।
हरिहयद्वेपिदारण हरपुरप्लोपकारण
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ ४

दनुजविस्तारकर्तन जनितमिस्राविकर्तन
दनुजविद्यानिकर्तन भजदविद्यानिवर्तन ।
अमरदृष्टस्वविक्रम समरजुष्टभ्रमिक्रम
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ ५

प्रतिमुखालीढबन्धुर पृथुमहाहेतिदन्तुर
विकटमायाबहिष्कृत विविधमालापरिष्कृत ।
स्थिरमहायन्त्रयन्त्रित दृढदयातन्त्रयन्त्रित
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ ६

महितसम्पत्सदक्षर विहितसम्पत्षडक्षर
षडरचक्रप्रतिष्ठित सकलतत्त्वप्रतिष्ठित ।
विविधसङ्कल्पकल्पक विबुधसङ्कल्पकल्पक
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ ७

भुवननेत्रस्त्रयीमय सवनतेजस्त्रयीमय
निरवधिस्वादुचिन्मय निखिलशक्ते जगन्मय ।
अमितविश्वक्रियामय शमितविष्वग्भयामय
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ ८

द्विचतुष्कमिदं प्रभूतसारं
पठतां वेङ्कटनायकप्रणीतम् ।
विषमेऽपि मनोरथः प्रधावन्
न विहन्येत रथाङ्गधुर्यगुप्तः ॥ ९

कवितार्किकसिंहाय कल्याणगुणशालिने
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः
श्रीमते निगमान्तमहादेशिकाय नमः

—०—

श्रीमते रामानुजाय नमः ।

# अथ वैराग्यपञ्चकम् ।

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

क्षोणीकोणशतांशपालनकलादुर्वारगर्वानल-
क्षुभ्यत्क्षुद्रनरेन्द्रचाटुरचनाधन्यान् न मन्यामहे।
देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा
धानामुष्टिमुचे कुचेलमुनये धत्ते स्म वित्तेशताम् ॥ १

सिलं किमनलं भवेदनलमौदरं बाधितुं
पयःप्रसृतिपूरकं किमु न धारकं सारसम् ।
अयत्नमलमल्लकं पथि पटच्चरं कच्चरं
भजन्ति विबुधा मुधा ह्यहह कुक्षितः कुक्षितः॥ २

ज्वलतु जलधिक्रोडक्रीडत्कृपीडभव प्रभा
प्रतिभटपटु ज्वालामालाकुलो जठरानलः ।
तृणमपि वयं सायं संफुल्लमल्लिमतल्लिका
परिमलमुचा वाचा याचामहे न महीश्वरान् ॥ ३

दुरीश्वरद्वारबहिर्वितर्दिका-
दुरासिकायै रचितोऽयमञ्जलिः ।
यदञ्जनाभं निरपायमस्ति मे
धनञ्जयस्यन्दनभूषणं धनम् ॥ ४

शरीरपतनावधि प्रभुनिषेवणापादना-
दबिन्धनधनञ्जयप्रशमद धन दन्धनम् ।
धन जयविवर्धन धनमुदूढगोवर्धनं
सुसाधनमबाधन सुमनसा समाराधनम् ॥ ५

नास्ति पित्रार्जित किंचन्नमया किंचिदर्जितम् ।
अस्ति मे हस्तिशैलाग्रे वस्तु पैतामह धनम् ॥

इति श्रीसर्वतन्त्रस्वतन्त्रवेदान्तदेशिकाचार्यकृत
वैराग्यपञ्चक समाप्तम्

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नम ॥
॥ श्रीमते निगमान्तमहादेशिकाय नम ॥

॥ श्रीः ॥

# न्यासदशकम् ।

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

अहं मद्रक्षणभरो मद्रक्षणफलं तथा ।
न मम श्रीपतेरेवेत्यात्मानं निक्षिपेद्बुधः ॥ १

न्यस्याम्यकिंचनः श्रीमन्ननुकूलोऽन्यवर्जितः ।
विश्वासप्रार्थनापूर्वमात्मरक्षाभरं त्वयि ॥ २

स्वामिन् स्वशेषं स्ववशं स्वभरत्वेन निर्भरम् ।
स्वदत्तस्वधिया स्वार्थं स्वस्मिन्न्यस्यसि मां स्वयम् ॥ ३

श्रीमन्नभीष्टवरद त्वामस्मि शरणं गतः ।
एतद्देहावसाने मां त्वत्पादं प्रापय स्वयम् ॥ ४

त्वच्छेषत्वे स्थिरधियं त्वत्प्राप्त्येकप्रयोजनम् ।
निषिद्धाकाम्यरहितं कुरु मां नित्यकिंकरम् ॥ ५

देवी भूषणहेत्यादिजुष्टस्य भगवंस्तव ।
नित्यं निरपराधेषु कैंकर्येषु नियुङ्क्ष्व माम् ॥ ६

मां मदीयं च निखिलं चेतनाचेतनात्मकम् ।
स्वकैंकर्योपकरणं वरद स्वीकुरु स्वयम् ॥ ७

त्वदेकरक्षस्य मम त्वमेव करुणाकर ।
न प्रवर्तय पापानि प्रवृत्तानि निवर्तय ॥ ८

अकृत्यानां च करणं कृत्यानां वर्जनं च मे ।
क्षमस्व निखिलं देव प्रणतार्तिहर प्रभो ॥ ९

श्रीमन्नियतपञ्चाङ्गं मद्रक्षणभरार्पणम् ।
अचीकरत्स्वयं स्वस्मिन्नतोऽहमिह निर्भरः ॥ १०

इति श्री न्यासदशकम् सम्पूर्णम् ।

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्त महादेशिकाय नमः ॥

---

# वरदराजपञ्चाशत्

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

द्विरदशिखरिसीम्ना सद्मवान्पद्मयोने-
स्तुरगसवनवेद्यां श्यामलो हव्यवाहः ।
कलशजलधिकन्यावल्लरीकल्पशाखी
कलयतु कुशलं नः कोऽपि कारुण्यराशिः ॥ १

यस्यानुभावमधिगन्तुमशक्नुवन्तो
मुह्यन्त्यभङ्गुरधियो मुनिसार्वभौमाः ।
तस्यैव ते स्तुतिषु साहसमश्नुवानः
क्षन्तव्य एष भवता करिशैलनाथ ॥ २

जानन्ननादि विहितानपराधवर्गान्
स्वामिन्भयात्किमपि वक्तुमहं न शक्तः ।
अव्याजवत्सल तथापि निरङ्कुशं मां
वात्सल्यमेव भवतो मुखरीकरोति ॥ ३

किं व्याहरामि वरद स्तुतये कथं वा
खद्योतवत्प्रलघुसंकुचितप्रकाशः ।
तन्मे समर्पय मतिं च सरस्वतीं च
त्वामञ्जसा स्तुतिपदैर्यदहं धिनोमि ॥ ४

मच्छक्तिमात्रगणने किमिहास्ति शक्यं
शक्येन वा तव करीश किमस्ति साध्यम् ।
यद्यस्ति साधय मया तदपि त्वया वा
किं वा भवेद्भवति किंचिदनीहमाने ॥ ५

स्तोत्र मया विरचित त्वदधीनवाचा
त्वत्प्रीतये वरद यत्तदिद न चित्रम् ।
आवर्जयन्ति हृदय खलु शिक्षकाणां
मञ्जूनि पञ्जरशकुन्तविजल्पितानि ॥ ६

य चक्षुषामविषय हयमेधयज्वा
द्राघीयसा सुचरितेन ददर्श वेधा ।
त त्वा करीश करुणापरिणामतस्ते
भूतानि हन्त निखिलानि निशामयन्ति ॥ ७

तत्तत्पदैरुपहितेऽपि तुरङ्गमेधे
शक्रादयो वरद पूर्वमलब्धभागा ।
अभ्यर्थिते मखपतौ त्वयि चक्षुषैव
हैरण्यगर्भहविषा रसमन्वभूवन् ॥ ८

सर्गस्थितिप्रलयविभ्रमनाटिकाया
शैलूषवद्विविधवेषपरिग्रह त्वाम् ।
सभावयन्ति हृदयेन करीश धन्या
ससारवारिनिधिसतरणैकपोतम् ॥ ९

प्राप्तोदयेषु वरद त्वदनुप्रवेशात्
पद्मासनादिषु शिवादिषु कञ्चुकेषु ।
तन्मात्रदर्शनविलोभितशेमुषीका
स्तादात्म्यमूढमतयो निपतन्त्यधीरा ॥ १०

मध्ये विरिंचिशिवयोर्विहितावतार
ख्यातोऽसि तत्समतया तदिद न चित्रम् ।
मायावशेन मकरादिशरीरिण त्वां
तानेव पश्यति करीश यदेष लोक ॥

ब्रह्मेति शंकर इतीन्द्र इति स्वराडि-
त्यात्मेति सर्वमिति सर्वचराचरात्मन् ।
हस्तीश सर्ववचसामवसानसीमां
त्वां सर्वकारणमुशन्त्यनपायवाचः ॥ १२

आशाधिपेषु गिरिशेषु चतुर्मुखेष्व-
प्यव्याहता विधिनिषेधमयी तवाज्ञा ।
हस्तीश नित्यमनुपालनलङ्घनाभ्यां
पुंसां शुभाशुभमयानि फलानि सूते ॥ १३

आतापदि स्थितिपदं भरणं प्ररोह-
श्छाया करीश सरसानि फलानि च त्वम् ।
शाखागतत्रिदशवृन्दशकुन्तकानां
किं नाम नासि महतां निगमद्रुमाणाम् ॥ १४

सामान्यबुद्धिजनकाश्च सदादिशब्दा-
स्तत्त्वान्तरभ्रमकृतश्च शिवादिवाचः ।
नारायणे त्वयि करीश वहन्त्यनन्य-
मन्वर्थवृत्तिपरिकल्पितमैककण्ठ्यम् ॥ १५

संचिन्तयन्त्यखिलहेयविपक्षभूत
शान्तोदितं शमवता हृदयेन धन्याः ।
नित्यं परं वरद सर्वगतं सुसूक्ष्मं
निष्पन्दनन्दथुमयं भवतः स्वरूपम् ॥ १६

विश्वातिशायि सुखरूप यदात्मकस्त्वं
व्यक्तिं करीश कथयन्ति तदात्मिकां ते ।
येनाधिरोहति मतिस्त्वदुपासकानां
सा किं त्वमेव तव वेति वितर्कडोलाम् ॥ १७

मोहान्धकारविनिवर्तनजागरूके
दोषा दिवापि निरवग्रहमेधमाने ।
त्वत्तेजसि द्विरदशैलपतेऽविसृष्टे
श्लाघ्येत मतमसपर्य सहस्रभानो ॥ १८

रूढस्य चिन्मयतया हृदये करीश
स्तम्बानुकारिपरिणामविशेषभाज ।
स्थानेषु जाग्रति चतुर्ष्वपि सत्त्ववन्त
शाखाविभागचतुरे तव चातुरात्म्ये ॥ १९

नागाचलेश निखिलोपनिषन्मनीषा
मञ्जूषिकामरकत परिचिन्वता त्वाम् ।
तन्वी हृदि स्फुरति कापि शिखा मुनीना
सौदामिनीव निभृता नवमेघगर्भा ॥ २०

औदन्वते महति सद्मनि भासमाने
श्लाघ्ये च दिव्यसदने तमस परस्मिन् ।
अन्त कलेवरमिद सुषिर सुसूक्ष्म
जात करीश कथमादरणास्पद ते ॥ २१

बालाकृतेर्वटपलाशमितस्य यस्य
ब्रह्माण्डमण्डलमभूदुदरैकदेशे ।
तस्यैव तद्वरद हन्त कथ प्रभूत
वाराहमास्थितवतो वपुरद्भुत ते ॥ २२

भक्तस्य दानवशिशो परिपालनाय
भद्रां नृसिंहकुहनामधिजग्मुषस्ते ।
स्तम्भैकवर्जमधुनापि करीश नून
त्रैलोक्यमेतदखिल नरसिंहगर्भम् ॥ २३

अतिकृपणोऽपि जन्तुरधिगम्य दये भवती
मशिथिलधर्मसेतुपदवी रुचिरामचिरात् ॥
अमितमहोर्मिजालमतिलङ्घ्यभवाम्बुनिधिं
भवति वृषाचलेशपदपत्तननित्यधनी ॥ ५१

अभिमुखभावसम्पदभिसम्भविना भविना
क्वचिदुपलक्षिता क्वचिदभङ्गुरगूढगतिः ॥
विमलरसावहा वृषगिरीशदये भवती
सपदि सरस्वतीव शमयत्यघमप्रतिघम् ॥ ५२

अपि करुणे जनस्य तरुणेन्दुविभूषणता
मपि कमलासनत्वमपि धाम वृषाद्रिपते ॥
तरतमतावशेन तनुते ननु ते विततिः
परहितवर्त्मना परिपचेलिमकेलिमती ॥ ५३

धृतभुवना दये त्रिविधगत्यनुकूलतरा
वृषगिरिनाथपादपरिरम्भवती भवती ॥
अविदित वैभवापि सुरसिन्धुरिवातनुते
सकृदवगाहमानमपतापमपापमपि ॥ ५४

निगमसमाश्रिता निखिललोकसमृद्धिकरी
भजदघकूलमुद्वहगतिः परितप्तहिता ॥
प्रकटितहंसमत्स्यकमठाद्यवतारशता
विबुधसरिच्छ्रिय वृषगिरीशदये वहसि ॥ ५५

जगति मतिम्पचा त्वदितरा तु दये तरला
फलनियमोज्झिता भवति सन्तपनाय पुनः ॥
त्वमिह निरङ्कुशप्रशकनादिविभूतिमती
वितरसि देहिनां निरवधिं वृषशैलनिधिम् ॥ ५६

सकरुणलौकिकप्रभुपरिग्रहनिग्रहयो-
नियतिमुपाधिचक्रपरिवृत्तिपरम्परया
वृषभमहीधरेशकरुणे वितरङ्गयतां
श्रुतिमितसम्पदि त्वयि कथं भविता विशयः ॥ ५७

वृषगिरिकृष्णमेघजनितां जनितापहरां
त्वदभिमतिं सुवृष्टिमुपजीव्य निवृत्ततृषः ॥
बहुषु जलाशयेषु बहुमानमपोह्य दये
न जहति सत्पथं जगति चातकवत्कृतिनः ॥ ५८

त्वदुदयतूलिकाभिरमुना वृषशैलजुषा
स्थिरतरशिल्पिनैव परिकल्पितचित्रधियः ॥
यतिपतियामुनप्रभृतयः प्रथयन्ति दये
जगति हितं न नस्त्वयि भरन्यसनादधिकम् ॥ ५९

मृदुहृदये दये मृदितकामहिते महिते
धृतविबुधे बुधेषु विततात्मधुरे मधुरे ॥
वृषगिरिसार्वभौमदयिते मयि ते महतीं
भवुकनिधे निधेहि भवमूलहरां लहरीम् ॥ ६०

अकूपारैरेकोदकसमयवैतण्डिकजवै-
रनिर्वाप्यां क्षिप्रं क्षपयितुमविद्याख्यवडवाम् ॥
कृपे त्वं तत्तादृक्प्रथिमवृषपृथ्वीधरपति-
स्वरूपद्वैगुण्यद्विगुण निज बिन्दुः प्रभवसि ॥६१

विवित्सावेतालीविगमपरिशुद्धेऽपि हृदये
पटुप्रत्याहारप्रभृतिपुटपाकप्रचकिताः ॥
नमन्तस्त्वां नारायणशिखरि कूटस्थकरुणे
निरुद्धत्वद्द्रोहा नृपतिसुतनीतिं न जहति ॥ ६२

अनन्याधीन सन् भवति परतन्त्र प्रणमता
कृपे सर्वद्रष्टा न गणयति तेषामपकृतिम् ॥
पतिस्त्वपारार्थ्य प्रथयति वृषक्ष्माधरपति
र्व्यवस्था वैयात्यादिति विघटयन्ती विहरसि ॥ ६३

अपां पत्यु शत्रूनसहनमुनेर्धर्मनिगड
कृपे काकस्यैक हितमिति हिनस्ति स्मनयनम् ॥
विलीनस्वातन्त्र्यो वृषगिरिपतिस्त्वद्विहृतिभि-
र्दिशत्येव देवो जनितसुगति दण्डनविधिम् ॥ ६४

निषादाना नेता कपिकुलपति कापि शबरी
कुचेल कुब्जा सा व्रजयुवतयो माल्यकृदिति ॥
अमीषां निम्नत्व वृषगिरिपतेरुन्नतिमपि
प्रभूतै स्रोतोभि प्रसभमनुकम्पे शमयसि ॥ ६५

त्वया दृष्टस्तुष्टिं भजति परमेष्ठी निजपदे
वहन्मूर्तीरष्टौ विहरति मृडानीपरिवृढः ॥
बिभर्ति स्वाराज्य वृषशिखरिशृङ्गारिकरुणे
शुनासीरो देवासुर समरनासीरसुभटः ॥ ६६

दये दुग्धोदन्वद्व्यतिषुतसुधासिन्धुनयत
स्त्वदाश्लेषान्नित्य जनितमृतसजीवनदशाः ॥
स्वदन्ते दान्तेभ्य श्रुतिवदनकर्पूरगुलिका-
विधुन्वन्तश्चित्त वृषशिखरिविश्वम्भरगुणा ॥ ६७

जगज्जन्मस्थेमप्रलयरचनाकेलिरसिको
विमुक्त्येकद्वारं विघटितकपाट प्रणयिनाम् ॥
इति त्वय्यायत्त द्वितयमुपधीकृत्य करुणे
विशुद्धानां वाचां वृषशिखरिनाथस्तुतिपदम् ॥ ६८

कलिक्षोभोन्मीलत्क्षितिकलुषकूलंकषजवै-
रनुच्छेदै रेतैरवटतटवैषम्यरहितैः ।
प्रवाहैस्ते पद्मासहचरपरिष्कारिणि कृपे
विकल्पन्तेऽनल्पावृषशिखरिणो निर्झरगुणाः ॥६९

खिलं चेतोवृत्तेः किमिदमिति विस्मेरभुवनं
कृपे सिंहक्ष्मात्कृतमुखचमत्कारकरणम् ।
भरन्यासच्छन्नप्रबलवृजिनप्राभृतभृतां
प्रतिप्रस्थानं ते श्रुतिनगरशृङ्गाटकजुषः ॥ ७०

त्रिविधचिदचित्सत्तास्थेमप्रवृत्तिनियामिका
वृषगिरिविभोरिच्छा सा त्वं परैरपराहता ।
कृपणभरभृत्किंकुर्वाणप्रभूतगुणान्तरा
वहसि करुणे वैचक्षण्यं मदीक्षणसाहसे ॥ ७१

वृषगिरिपतेर्हृद्या विश्वावतारसहायिनी
क्षपितनिखिलावद्या देवि क्षमादिनिषेविता ।
भुवनजननी पुंसां भोगापवर्गविधायिनी
वितमसि पदे व्यक्तिं नित्यां बिभर्षि दये स्वयम् ॥७२

स्वयमुदयिनः सिद्धाद्याविष्कृताश्च शुभालया
विविधविभवव्यूहावासाः परं च पदं विभोः ।
वृषगिरिमुखेष्वेतेष्विच्छावधिप्रतिलब्धये
दृढविनिहता निःश्रेणिस्त्वं दये निजपर्वभिः ॥७३

हितमितिजगद्दृष्ट्या क्लृप्तैरक्लृप्तफलान्तरै-
रमतिविहितैरन्यैर्धर्मायितैश्च यदृच्छया ।
परिणतबहुच्छद्मा पद्मासहायदये स्वय
प्रदिशसि निजाभिप्रेतं नः प्रशाम्यदपत्रपा ॥७४

अतिविधिशिवैरैश्वर्यात्मानुभूतिरसैर्जना-
नहृदयमिहोपच्छन्द्यैपामसङ्गदशार्थिनी ।
तृषितजनतातीर्थस्नानक्रमक्षपितैनसा
वितरसि दये वीतातङ्काद्वृषाद्रिपते॰ पदम् ॥ ७५

वृषगिरिसुधासिन्धौ जन्तुर्दये निहितस्त्वया
भवभयपरीतापच्छित्यै भजन्नघमर्पणम् ।
मुषितकलुषो मुक्तेरग्रे सरैरभिपूर्यते
स्वयमुपनतै स्वात्मानन्दप्रभृत्यनुबन्धिभि ॥७६

अनितरजुषामन्तर्मूलेऽप्यपायपरिप्लवे
कृतविदनघाविच्छित्यैषा कृपेयमवश्यताम् ।
प्रपदनफलप्रत्यादेशप्रसङ्गविवर्जित
प्रतिविधिमुपादित्से सार्धं वृषाद्रिहितैपिणा ॥७७

क्षणविलयिनां शास्त्रार्थाना फलाय निवेशिते
पितृसुरगणे निर्वेशात्प्रागपि प्रलय गते ।
अधिगतवृषक्ष्माभृन्नाथामकालवशवदां
प्रतिभुवमिह व्याचख्युस्त्वां कृपे निरुपप्लवाम् ॥७८

त्वदुपसदनादद्य श्वो वा महाप्रलयेऽपि वा
वितरति निज पादाम्भोज वृषाचलशेखर॰ ।
तदिह करुणे तत्तत्क्रीडातरङ्गपरम्परा-
तरतमतया जुष्टायास्ते दुरत्ययतां विदु ॥ ७९

प्रणिहितधिया त्वत्सम्पृक्ते वृषाद्रिशिखामणौ
प्रसुमरसुधाधाराकारा प्रसीदति भावना ।
दृढमिति दये दत्तास्वाद विमुक्तिवलाहक
निभृतगरुतो निध्यायन्ति स्थिराशयचातका ॥८०

कृपे विगतवेलया कृतसमग्रपोषैस्त्वया
कलिज्वलनदुर्गते जगति कालमेघायितम् ।
वृषक्षितिधरादिषु स्थितिपदेषु सानुप्लवै-
र्वृषाद्रिपतिविग्रहैर्व्यपगताखिलावग्रहैः ॥ ८१

प्रसूय विविधं जगत्तदभिवृद्धये त्वं दये
समीक्षणविचिन्तनप्रभृतिभिः स्वयं तादृशैः ।
विचित्रगुणचित्रितां विविधदोषवैदेशिकीं
वृषाचलपतेस्तनुं विशसि मत्स्यकूर्मादिकाम् ॥८२

युगान्तसमयोचितं भजति योगनिद्रारसं
वृषक्षितिभृदीश्वरे विहरण क्रमाज्जाग्रति ।
उदीर्णचतुरर्णवीकदनवेदिनीं मेदिनीं
समुद्धृतवती दये तदभिजुष्टया दंष्ट्रया ॥ ८३

सटापटलभीषणे सरभसाट्टहासोद्भटे
स्फुरत्क्रुधिपरिस्फुरद्भ्रुकुटिकेऽपि वक्त्रे कृते ।
दये वृषगिरीशितुर्दनुजडिम्भदत्तस्तना-
सरोजसदृशा दृशासमुदिताकृतिर्दृश्यसे ॥ ८४

प्रसक्तमधुना विधिप्रणिहितैस्सपर्योदकैः
समस्तदुरितच्छिदा निगमगन्धिना त्वं दये ।
अशेषमविशेषतस्त्रिजगदञ्जनाद्रीशितु-
श्चराचरमचीकरश्चरणपङ्कजेनाङ्कितम् ॥ ८५

परश्वधतपोधनप्रथनसत्क्रतूपाकृत-
क्षितीश्वरपशुक्षरत्क्षतजकुङ्कुमस्थासकैः ।
वृषाचलदयालुना ननु विहर्तुमालिप्यथा
निधाय हृदये दये निहितरक्षितानां हितम् ॥ ८६

कृपे कृतजगद्धिते कृपणजन्तुचिन्तामणौ
रमासहचरक्षितौ रघुधुरीणयन्त्या त्वया ।
व्यभजत सरित्पति सकृदवेक्षणाल्लक्षणाद्-
प्रकृष्टबहुपातकप्रशमहेतुना सेतुना ॥ ८७

कृपे परवतस्त्वया वृषगिरीशितु क्रीडित
जगद्धितमशेषतस्तदिदमित्थमर्थाप्यते ।
मदच्छलपरिच्युतप्रणतदुष्कृतप्रेक्षितै-
र्हतप्रबलदानवैर्हलधरस्य हेलाशतै ॥ ८८

प्रभूतविबुधद्विषद्भरणखिन्नविश्वम्भराभरा
पनयनच्छलात्त्वमवतार्य लक्ष्मीधरम् ।
निराकृतवती दये निगमसौधदीपश्रिया
विपश्चिदविगीतया जगति गीतयान्धतम ॥ ८९

वृषाद्रिहयसादिन प्रबलदोर्मरुत्प्रेङ्खित
स्त्वया स्फुटतटिद्गुणस्त्वदवसेकसंस्कारवान् ।
करिष्यति दये कलिप्रबलधर्मनिर्मूलन
पुन कृतयुगाङ्कुरं भुवि कृपाणधाराधरः ॥ ९०

विश्वोपकारमिति नाम सदा दुहाना-
मद्यापि देवि भवतीमवधीरयन्तम् ।
नाथे निवेशय वृषाद्रिपतौ दये त्व
न्यस्तस्वरक्षभर त्वयि मां त्वयैव ॥ ९१

नैसर्गिकेण तरसा करुणे नियुक्ता
निम्नेतरेऽपि मयि ते विततिर्यदि स्यात् ।
विस्मापयेद्वृषगिरीश्वरमप्यवार्या
वेलातिलङ्घनदशेव महाम्बुराशे ॥ ९२

विज्ञातशासनगतिर्विपरीतवृत्त्या
वृत्रादिभिः परिचितां पदवीं भजामि ।
एवंविधे वृषगिरीशदये मयि त्वं
दीने विभोः शमय दण्डधरत्वलीलाम् ॥ ६३

मा साहसोक्तिघनकञ्चुकवञ्चितान्यः
पश्यत्सु तेषु विदधाम्यतिसाहसानि ।
पद्मासहायकरुणेन रुणत्सि किं त्वं
घोरं कुलिङ्गशकुनेरिव चेष्टितं मे ॥ ६४

विक्षेपमर्हसि दये विफला यितेऽपि
व्याजं विभाव्य वृषशैलपतेर्विहारम् ।
स्वाधीनसत्त्वसरणिः स्वयमत्र जन्तौ
द्राघीयसी दृढतरा गुणवागुरात्वम् ॥ ६५

सन्तन्यमानमपराधगणं विचिन्त्य
त्रस्यामि हन्त भवतीं च विभावयामि ।
अह्नाय मे वृषगिरीश दये जहीमा-
माशीविषग्रहणकेलिनिभामवस्थाम् ॥ ६६

औत्सुक्यपूर्वमुपहृत्य महापराधान्-
मातः प्रसादयितुमिच्छति मे मनस्त्वाम् ।
आलिह्यतान् निरवशेषमलब्धतृप्ति-
स्ताम्यस्यहो वृषगिरीशधृता दये त्वम् ॥ ६७

जह्यादृषाचलपतिः प्रतिघेऽपि न त्वां
धर्मोपतप्त इव शीतलतामुदन्वान् ।
सा मामरुंतुदभरन्यसनानुवृत्ति-
स्तद्वीक्षणैः स्पृश दये तव केलिपद्मैः ॥ ६८

दृष्टेऽपि दुर्बलधियं दमनेऽपि दृप्तं
स्नात्वापि धूलिरसिकं भजनेऽपि भीमम् ।
बध्वा गृहाण वृषशैलपतेर्दये मां
त्वद्वारणं स्वयमनुग्रहशृङ्खलाभिः ॥ ९९

नातः परं किमपि मे त्वयि नाथनीयं
मातर्दये मयि कुरुष्व तथा प्रसादम् ।
बद्धादरो वृषगिरिप्रणयी यथासौ
मुक्तानुभूतिमिह दास्यति मे मुकुन्दः ॥ १००

निस्सीमवैभवजुषां मिषतां गुणानां
स्तोतुर्दये वृषगिरीशगुणेश्वरीं त्वाम् ।
तैरेव नूनमवशैरभिनन्दितं मे
सत्यापितं तव बलादकुतोभयत्वम् ॥ १०१

अद्यापि तद्वृषगिरीशदये भवत्या-
मारम्भमात्रमनिदं प्रथमस्तुतीनाम् ।
संदर्शितस्वपरनिर्वहणा सहेथाः
मन्दस्य साहसमिदं त्वयि वन्दिनो मे ॥ १०२

प्रायो दये त्वदनुभावमहाम्बुराशौ
प्राचेतसप्रभृतयोऽपि परं तटस्थाः ।
तत्रावतीर्णमतलस्पृशमाप्लुतं मां
पद्मापतेः प्रहसनोचितमाद्रियेथाः ॥ १०३

वेदान्तदेशिकपदे विनिवेश्य बालं
देवो दयाशतकमेतदवादयन्माम् ।
वैहारिकेण विधिना समये गृहीतं
वीणाविशेषमिव वेङ्कटशैलनाथः ॥ १०४

अनवधिमधिकृत्य श्रीनिवासानुकम्पा-
मवितथविषयत्वाद्विश्वमव्रीडयन्ती ।
विविधकुशलनीवीवेङ्कटेशप्रसूता
स्तुतिरियमनवद्या शोभते सत्वभाजाम् ॥ १०५

शतकमिदमुदारं सम्यगभ्यस्यमानान्-
वृषगिरिमधिरुह्य व्यक्तमालोकयन्ती ।
अनितरशरणानामाधिराज्येऽभिषिञ्चे-
च्छमितविमतपक्षा शार्ङ्गधन्वानुकम्पा ॥ १०६

विश्वानुग्रहमातरं व्यतिषजत्स्वर्गापवर्गां सुधा-
सध्रीचीमिव वेङ्कटेश्वरकविर्भक्त्यादयामस्तुत ।
पद्यानामिह यद्विधेयभगवत्संकल्पकल्पद्रुमात्
झञ्झामारुतधूतचूतनयतः सांपातिकोऽयं क्रमः ॥ १०७

कामं सन्तु मिथःकरम्बितगुणावद्यानि पद्यानि नः
कस्यास्मिन् शतके सदम्बुकतके दोषश्रुतिं क्षाम्यति ।
निष्प्रत्यूहवृषाद्रिनिर्झरझरत्कारच्छलेनोच्चल-
द्दीनालम्बनदिव्यदंपतिदयाकल्लोलकोलाहलः ॥१०८

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कट-
नाथस्य वेदान्ताचार्यस्य कृतिषु दयाशतकं सम्पूर्णम् ४२
श्रीरस्तु ॥

—०—

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥

॥ श्री ॥

# यतिराजसप्ततिः

— ०:० —

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

कमप्याद्य गुरु वन्दे कमलागृहमेधिनम् ।
प्रवक्ता च्छन्दसा वक्ता पञ्चरात्रस्य य स्वयम् । १

सहधर्मचारीं शौरे संमन्त्रितजगद्धिताम् ।
अनुग्रहमयीं वन्दे नित्यमज्ञातनिग्रहाम् ॥ २

वन्दे वैकुण्ठसेनान्य देव सूत्रवतीसखम् ।
यद्वेत्रशिखरस्पन्दे विश्वमेतद्व्यवस्थितम् ॥ ३

यस्य सारस्वत स्रोतो वकुलामोदवासितम् ।
श्रुतीनां विश्रमायाल शठारिं तमुपास्महे ॥ ४

नाथेन मुनिना तेन भवेयं नाथवानहम् ।
यस्य नैगमिक तत्त्व हस्तामलकतां गतम् ॥ ५

नमस्याम्यरविन्दाक्ष नाथभावे व्यवस्थितम् ।
शुद्धसत्त्वमय शौरेरवतारमिवापरम् ॥ ६

अनुज्झितक्षमायोगमपुण्यजनबाधकम् ।
अस्पृष्टमदराग त राम तुर्यमुपास्महे ॥ ७

विगाहे यामुन तीर्थं साधुबृन्दावने स्थितम् ।
निरस्तजिह्मगस्पर्शे यत्र कृष्ण कृतादर ॥ ८

दयानिघ्नं यतीन्द्रस्य देशिकं पूर्णमाश्रये ।
येन विश्वसृजो विष्णोरपूर्यत मनोरथः ॥ ९

प्रणामं लक्ष्मणमुनिः प्रतिगृह्णातु मामकम् ।
प्रसाधयति यत्सूक्तिः स्वाधीनयतिकां श्रुतिम् ॥ १०

उपवीतिनमूर्ध्वपुण्ड्रवन्तं
त्रिजगत्पुण्यफलं त्रिदण्डहस्तम् ।
शरणागतसार्थवाहमीडे
शिखया शेखरिणं पतिं यतीनाम् ॥ ११

प्रथयन्विमतेषु तीक्ष्णभावं
प्रभुरस्मत्परिरक्षणे यतीन्द्रः ।
अपृथक्प्रतिपन्नयन्मयत्वै-
र्ववृधे पञ्चभिरायुधैर्मुरारेः ॥ १२

शमितोदयशंकरादिगर्वः
स्वबलादुद्धृतयादवप्रकाशः ।
अवरोपितवान् श्रुतेरपार्था-
न्ननु रामावरजः स एष भूयः ॥ १३

अबहुश्रुतसंभवं श्रुतीनां
जरतीनामयथायथप्रचारम् ।
विनिवर्तयितुं यतीश्वरोक्ति-
र्विदधे ताः स्थिरनीतिपञ्जरस्थाः ॥ १४

अमुना तपनातिशायिभूम्ना
यतिराजेन निबद्धनायकश्रीः ।
महती गुरुपङ्क्तिहारयष्टि-
र्विबुधानां हृदयंगमा विभाति ॥ १५

अलूनपक्षस्य यतिक्षमाभृतो
विभाति वंशे हरितत्त्वमक्षतम् ।
यदुद्भवाः शुद्धसुवृत्तशीतलाः
भवन्ति मुक्तावलिभूषणं भुवः ॥ १६

अनपायविष्णुपदसंश्रयं भजे
कलया कयापि कलयाप्यनुज्झितम् ।
अकलङ्कयोगमजडाशयोदितं
यतिराजचन्द्रमुपरागदूरगम् ॥ १७

अभिगम्य सम्यगनघाः सुमेधसो
यतिचक्रवर्तिपदपद्मपत्तनम् ।
हरिभक्तदास्यरसिकाः परस्परं
क्रयविक्रयार्हदशया समिन्धते ॥ १८

परुषातिवादपरिवादपैशुन
प्रभृतिप्रभूतपतनीयपङ्किला ।
स्वदते ममाद्य सुभगा सरस्वती
यतिराजकीर्तिकतकैर्विशोधिता ॥ १९

अनुकल्पभूतमुरभित्पदं सतां
भजतां त्रिवर्गमपवर्गवैभवम् ।
चलचित्तवृत्तिविनिवर्तनौषधं
शरणं यतीन्द्रचरणं वृणीमहे ॥ २०

असितावधूतपरवादिवैभवा
निगमान्तनीतिजलधेस्तलस्पृशः ।
प्रतिपादयन्ति गतिमापवर्गिकीं
यतिसार्वभौमपदसात्कृताशयाः ॥ २१

मूले निवेश्य महतां निगमद्रुमाणां
मुष्णन्प्रतारकभयं धृतनैकदण्डः ।
रङ्गेशभक्तजनमानसराजहंसो
रामानुजः शरणमस्तु मुनिः स्वयं नः ॥ २२

सन्मन्त्रवित्क्षिपति संयमिनां नरेन्द्रः
संसारजिह्मगमुखैः समुपस्थितं नः ।
विष्वक्कृत विषयलोभविषं निजाभि-
र्गाढानुभावगरुडध्वजभावनाभिः ॥ २३

नाथः स एष यमिनां नखरश्मिजालै-
रन्तर्निलीनमपनीय तमो मदीयम् ।
विज्ञानचित्रमनघं लिखतीव चित्ते
व्याख्यानकेलिरसिकेन कराम्बुजेन ॥ २४

उद्गृह्णतीमुपनिषत्सु निगूढमर्थं
चित्ते निवेशयितुमल्पधियां स्वयं नः ।
पश्येम लक्ष्मणमुनेः प्रतिपन्नहस्ता-
मुन्निद्रपद्मसुभगामुपदेशमुद्राम् ॥ २५

आकर्षणानि निगमान्तसरस्वतीना-
मुच्चाटनानि वहिरन्तरुपप्लवानाम् ।
पथ्यानि घोरभवसंज्वरपीडितानां
हृद्यानि भान्ति यतिराजमुनेर्वचांसि ॥ २६

शीतस्वभावसुभगानुभवः शिखावान्
दोषावमर्दनियतोन्नतिरोषधीशः ।
तापानुबन्धशमनस्तपनः प्रजानां
रामनुजो जयतिसंवलितत्रिधामा ॥ २७

जयति सकलविद्यावाहिनीजन्मशैलो
जनिपथपरिवृत्तिश्रान्तविश्रान्तिशाखी ।
निखिलकुमतिमायाशर्वरीबालसूर्यो
निगमजलधिवेलापूर्णचन्द्रो यतीन्द्रः ॥ २८

मुनिबहुमतसारा मुक्तिनिश्रेणिकेयं
सहृदयहृदयानां शाश्वती दिष्टसिद्धिः ।
शमितदुरितगन्धा संयमीन्द्रस्य सूक्तिः
परिचितगहना नः प्रस्तुवीत प्रसादम् ॥ २९

भवमरुपरिखिन्नस्फीतपानीयसिन्धु-
र्दुरितरहितजिह्वादुग्धकुल्यासकुल्या ।
श्रुतिनयनसनाभिः शोभते लक्ष्मणोक्ति-
र्नरकमथनसेवास्वादनाडिंधमा नः ॥ ३०

हरिपदमकरन्दस्यन्दिनः संश्रिताना-
मनुगतबहुशाखास्तापमुन्मूलयन्ति ।
शमितदुरितगन्धाः संयमीन्द्रप्रबन्धाः
कथकजनमनीषाकल्पनाकल्पवृक्षाः ॥ ३१

नानामूर्तैर्जगति समयैर्नर्मलीलां विधित्सो-
रन्त्यं वर्णं प्रथयति विभोरादिमव्यूहभेदे ।
विश्वत्रातुं विषयनियतं व्यञ्जितानुग्रहः सन्
विष्वक्सेनो यतिपतिरभूद्वेत्रसारस्त्रिदण्डः ॥ ३२

लक्ष्यं बुद्धेः रसिकरसनालास्यलीलानिदानं
शुद्धास्वादं किमपि जगति श्रोत्रदिव्यौषधं नः ।
लक्ष्यालक्ष्यैः सितजलधिवद्भाति तात्पर्यरत्नै-
र्लक्ष्मीकान्तस्फटिकमुकुरो लक्ष्मणार्योपदेशः ॥३३

क्षितिमवधीरयन्त्यतिमनोरथसिद्धिमतीं
यतिपतिसंप्रदायनिरपायधनोपचिताः ।
मधुकरमौलिदभ्रमददन्तुरदन्तिघटा-
करटकटाहवाहियनशीकरशीभरिताम् ॥ ३४

निरुपधिरङ्गवृत्तिरसिकानभिताण्डवय-
न्निगमविमर्शकेलिरसिकैर्निभृतैर्विधृतः ।
गुणपरिणद्धसूक्तिदृढकोणविघट्टनया
रटति दिशामुखेषु यतिराजयशःपटहः ॥ ३५

इदंप्रथमसंभवत्कुमतिजालकूलङ्कषा
मृषामतविषानलज्वलितजीवजीवातवः ।
क्षरन्त्यमृतमक्षरं यतिपुरन्दरस्योक्तय-
श्चिरंतनसरस्वतीचिकुरबन्धसैरन्ध्रिकाः ॥ ३६

सुधाशनसुदुर्ग्रह श्रुतिसमष्टिमुष्टिन्धयः
कथाहवमसौगतान्कपटसौगतान्खण्डयन् ।
मुनिर्मनसि लक्ष्मणो मुदमुदञ्चयत्यञ्जसा
मुकुन्दगुणमौक्तिकप्रकरशुक्तिभिः सूक्तिभिः ॥३७

कपर्दिमतकर्दमं कपिलकल्पनावागुरां
दुरत्ययमतीत्य तद् द्रुहिणतन्त्रयन्त्रोदरम् ।
कुदृष्टिकुहनामुखे निपततः परब्रह्मणः
करग्रहविचक्षणो जयति लक्ष्मणोऽयं मुनिः ॥ ३८

कणादपरिपाटिभिः कपिलकल्पनानाटकैः
कुमारिलकुभाषितैर्गुरुनिबन्धनग्रन्थिभिः ।
तथागतकथाशतैस्तदनुसारिजल्पैरपि
प्रतारितमिदं जगत्प्रगुणितं यतीन्द्रोक्तिभिः ॥ ३९

कथाकलहकौतुकग्रहगृहीतकौतस्कुत-
प्रथाजलधिसप्लवगृसनकुम्भसभूतय. ।
जयन्ति सुधियो यतिक्षितिभृदन्तिकोपासना-
प्रभावपरिपक्त्रिमप्रमितिभारतीसपद ॥ ४०

यतीश्वरसरस्वतीसुरभिताशयाना सतां
वहामि चरणाम्बुज प्रणतिशालिना मौलिना ।
तदन्यमतदुर्मतज्वलितचेतसा वादिना
शिरस्सु निहित मया पदमदक्षिण लक्ष्यताम् ॥४१

भजस्व यतिभूपतेरनिदमादिदुर्वासना
कदध्वपरिवर्तनभ्रमनिवर्तनीं वर्तनीम् ।
लभस्व हृदय स्वय रथपदायुधानुग्रह
द्रुतप्रहृतिनिस्त्रुटद्दुरितदुर्ग्रतिनिर्वृतिम् ॥ ४२

कुमतिविहितग्रन्थग्रन्थिप्रभूतमतान्तर-
ग्रहिलमनस पश्यन्त्वल्पा यतीश्वरभारतीम् ।
विकटसुरभिद्वक्ष पीठीपरिष्करणोचित
कुलगिरितुलारोहे भावी कियानिव कौस्तुभ ॥४३

स्थविरनिगमस्तोमस्थेया यतीश्वरभारतीं
कुमतिफणितिक्षोभक्षीबा क्षिपन्तु भजन्तु वा ।
रसपरिमलश्लाघाघोषस्फुटत्पुटभेदन
लवणवणिज कर्पूरार्घं किमित्यभिमन्वते ॥ ४४

वहति महिलामाद्यो वेधास्त्रयीमुखरैर्मुखै-
र्धरतनुतया वामो भाग शिवस्य विवर्तते ।
तदपि परमं तत्त्व गोपीजनस्य वशवद
मदनकदनैर्न क्लिश्यन्ते यतीश्वरसश्रयाः ॥ ४५

निगमपथिकच्छायाशाखी निराशमहानिधि-
र्महितविविधच्छात्रश्रेणीमनोरथसारथिः ।
त्रिभुवनतमः प्रत्यूषोऽयं त्रिविद्यशिखामणिः
प्रथयति यतिक्ष्माभृत्पारावरीमविपर्ययाम् ॥ ४६

जडमतिसुधादन्तादन्तिव्यथौषधसिद्धयः
प्रमितिनिधयः प्रज्ञाशालिप्रपालनयष्टयः ।
श्रुतिसुरभयः शुद्धानन्दाभिवर्षुकवारिदा
यमगतिकथाविच्छेदिन्यो यतीश्वरसूक्तयः ॥ ४७

प्रतिकलमिह प्रत्यक्तत्त्वावलोकनदीपिका
यतिपरिबृढग्रन्थाश्चिन्तां निरन्तरयन्ति नः ।
अकलुषपरज्ञानौत्सुक्यक्षुधातुरदुर्दशा-
परिणतफलप्रत्यासीदत्फलेग्रहिसुग्रहाः ॥ ४८

मुकुन्दाङ्घ्रिश्रद्धाकुमुदवनचन्द्रातपनिभा
मुमुक्षामक्षोभ्यां ददति मुनिवृन्दारकगिरः ।
स्वसिद्धान्तभ्रान्तस्थिरकुतुकदुर्वादिपरिष-
द्दिवाभीतप्रेक्षादिनकरसमुत्थानपरुषाः ॥ ४९

निराबाधा बोधायनभणितिनिष्यन्दसुभगा
विशुद्धोपन्यासव्यतिभिदुरशारीरकनयाः ।
अकुण्ठैः कल्पन्ते यतिपतिनिबन्धा निजमुखै-
रनिद्राणप्रज्ञारसधमनिवेधाय सुधियाम् ॥ ५०

विकल्पाटोपेन श्रुतिपथमशेषं विघटयन्
यदृच्छानिर्दिष्टे यतिनृपतिशब्दे विरमति ।
वितण्डाहंकुर्वत्प्रतिकथकवैतण्डपृतना-
वियातव्यापारव्यतिमथनसंरम्भकलहः ॥ ५१

प्रतिष्ठा तर्काणां प्रतिपदमृचाधाम यजुषां
परिष्कारः साम्नां परिपणमथर्वाङ्गिरसयोः ।
प्रदीपस्तत्त्वानां प्रतिकृतिरसौ तापसगिरां
प्रसक्तिं सचित्ते प्रदिशति यतीशानफणितिः ॥५२

हृतावद्ये हृद्ये हरिचरणपङ्केरुहयुगे
निबध्नन्त्यैकान्त्यं किमपि यतिभूभृद्भणितयः ।
शुनासीरस्कन्दद्रुहिणहरहेरम्बहुतभुक्-
प्रमेशादिक्षुद्रप्रणतिपरिहारप्रतिभुवः ॥ ५३

यथाभूतस्वाथा यतिनृपतिसूक्तिर्विजयते
सुधासंदोहाब्धिः सुचरितविपश्चि श्रुतिमताम् ।
कथाहम्यत्कौतस्कुतकलहकोलाहलहत-
त्रिवेदीनिर्वेदप्रशमनविनोदप्रणयिनी ॥ ५४

श्रुतिश्रेणीचूडापदबहुमते लक्ष्मणमते
स्वपक्षस्थान्दोषान्वितथमतिरारोपयति यः ।
स्वहस्तेनोत्क्षिप्तैः स खलु निजगात्रेषु बहुलैः
गलद्भिर्जम्बालैर्गगनतलमालिम्पति जडः ॥ ५५

निरालोके लोके निरुपधिपरस्नेहभरितो
यतिक्ष्माभृद्दीपो यदि न किल जाज्वल्यत इह ।
अहंकारध्वान्तं विजहति कथंकारमनघा
कुतर्कव्यालौघं कुमतिमतपातालकुहरम् ॥ ५६

यतिक्ष्माभृद्दृष्टमतमिह नवीनं तदपि किं
ततः प्रागेवान्यद्वद तदपि किं वर्णनिकषे ।
निशाम्यन्तां यद्वा निजमतितिरस्कारविगमा-
च्चिरातङ्कादङ्कद्रमिडगुहदेवप्रभृतयः ॥ ५७

सुधासारं श्रीमद्यतिवरभुवः श्रोत्रकुहरे
निषिञ्चन्ति न्यञ्चन्निगमगरिमाणः फणितयः ।
यदास्वादाभ्यासप्रचयमहिमोल्लासितधियां
सदास्वाद्यं काले तदमृतमनन्तं सुमनसाम् ॥ ५८

यतिक्षोणीभर्तुर्यदिदमनिदंभोगजनता-
शिरः श्रेणीजुष्टं तदिह दृढबन्धं प्रभवति ।
अविद्यारण्यानीकुहरविहरन्मामकमनः-
प्रमाद्यन्मातङ्गप्रथमनिगलं पादयुगलम् ॥ ५९

सवित्री मुक्तानां सकलजगदेनः प्रशमनी
गरीयोभिस्तीर्थैरुपचितरसा यामुनमुखैः ।
निरुच्छेदा निम्नेतरमपि समाप्लावयति मां
यदृच्छाविक्षेपाद्यतिपतिदयादिव्यतटिनी ॥ ६०

चिन्ताशेषदुरर्थदन्तुरवचःकन्थाशतग्रन्थिलाः
सिद्धान्ता न समिन्धते यतिपतिग्रन्थानुसंधायिनि ।
मुक्ताशुक्तिविशुद्धसिद्धतटिनीचूडालचूडापदः
किं कुल्यां कलयेत खण्डपरशुर्मण्डूक मञ्जूषिकाम् ॥ ६१

वन्दे तं यमिनां धुरंधरमहं मानान्धकारद्रुहा
पन्थानं परिपन्थिनां निजदृशा रुन्धानमिन्धानया ।
दत्तं येन दयासुधाम्बुनिधिना पीत्वा विशुद्धं पयः
काले नः करिशैलकृष्णजलदः काङ्क्षाधिकं वर्षति ॥ ६२

काषायेण गृहीतपीतवसना दण्डैस्त्रिभिर्मण्डिता
सा मूर्तिर्मुरमर्दनस्य जयति त्रय्यन्तसंरक्षिणी ।
यत्प्रख्यापिततीर्थवर्धितधियामभ्यस्यतां यद्गुणा-
नासिन्धोरनिदंप्रदेशनियता कीर्तिः प्रजागर्ति नः ॥ ६३

लिप्से लक्ष्मणयोगिन पदयुग रथ्यापरागच्छटा-
रक्षारोपणधन्यसूरिपरिपत्सीमन्तसीमान्तिकम् ।
भिक्षापर्यटनक्षणेषु चिभराचक्रे गलत्किल्बिषा
यद्विन्यासमिषेण पत्रमकरीमुद्रा समुद्राम्बरा ॥ ६४

नानातन्त्रविलाभितेन मनसा निर्णीतदुर्नीतिभि
कष्ट कुत्सितदृष्टिभिर्यतिपतेरादेशवैदेशिकै. ।
व्यासो ह्रासपदीकृत परिहृत प्राचेतसश्चेतस'
क्लम केलिशुक शुक' स च मुधाबाधाय बोधायन ॥६५

अर्घ्यां तिष्ठति मामिका मतिरसावाजन्मराजन्वती
पत्या सयमिनामनेन जगतामत्याहितच्छेदिना ।
यत्सारस्वतदुग्धसागरसुधासिद्धौषधास्वादिनी
प्रस्वापाय न बोभवीति भगवन्मायामहायामिनी ॥ ६६

शुद्धादेशवशवदीकृतयतिक्षोणीशवाणीशता
प्रत्यादिष्टबहिर्गति श्रुतिशिर'प्रासादमासीदति ।
दुग्धोदन्वदपत्यसंनिधिसदासामोददामोदर
श्लक्ष्णालोकनदौर्ललित्यललितोन्मेषा मनीषा मम ॥६७

आस्तां नाम यतीन्द्रपद्धतिजुषामाजानशुद्धामति
स्तच्चाल्याजविदग्धमुग्धमधुर सारस्वत शाश्वतम् ।
को वा चक्षुरुदञ्चयेदपि पुर साटोपतर्कच्छटा
शस्त्राशस्त्रिविहारसभृतरणास्वादेषु वादेषु न ॥ ६८

पर्याप्त पर्यचैष कणचरणकथामाक्षपाद शिशिक्षे
मीमासामासलात्मा समजनिषि मुहु साख्ययोगौ समाख्यम् ।
इत्थ तैस्तैर्यतीन्द्रत्रुटितबहुमृपातन्त्रकान्तारपान्थै
र्न्वर्मोहक्षपान्थैरहह किमिह नश्चिन्तनीय तनीय' ॥ ६९

गाथा ताथागतानां गलति गमनिका कापिली क्वापि लीना
क्षीणा काणादवाणी द्रुहिणहरगिरः सौरभं नारभन्ते ।
क्षामा कौमारिलोक्तिर्जगति गुरुमतं गौरवाद्दूरवान्तं
का शङ्का शङ्करादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥७०

विष्वग्व्यापिन्यगाधे यतिनृपतियशः संपदेकार्णवेऽस्मिन्
श्रद्धाशुद्धावगाहैः शुभमतिभिरसौ वेङ्कटेशोऽभिषिक्तः ।
प्रज्ञादौर्जन्यगर्जत्प्रतिकथकवचस्तूलवातूलवृत्त्या
ससत्या सारवत्या समतनुत सतां प्रीतिमेतां समेताम् ॥ ७१

आशामतङ्गजगणानविवह्यवेगान्-
पादे यतिक्षितिभृतः प्रसभं निरुन्धन् ।
कार्यः कथाहवकुतूहलिभिः परेषां
कर्णे स एष कवितार्किकसिंहनादः ॥ ७२

उपशमितकुदृष्टिविप्लवाना-
मुपनिषदामुपचारदीपिकेयम् ।
कवलितभगवद्विभूतियुग्मां
दिशतु मतिंयतिराजसप्ततिर्नः ॥ ७३

करतलामलकीकृतसत्पथाः
श्रुतिवतंसितसूनृतसूक्तयः ।
दिवसतारकयन्ति समत्सरान्
यतिपुरन्दरसप्ततिसादराः ॥ ७४

॥ यतिराजसप्ततिः संपूर्णा ॥

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः ॥

# ॥ शरणागतिदीपिका ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

पद्मापते स्तुतिपदेन विपच्यमानं
पश्यन्त्विह प्रपदनप्रवणा महान्तः ।
मद्वाक्यसंवलितमप्यजहत्स्वभावं
मान्यं यतीश्वरमहानससम्प्रदायम् ॥ १

नित्यं श्रिया वसुधया च निषेव्यमाणं
निर्व्याजनिर्भरदयाभरितं विभाति ।
वेदान्तवेद्यमिह वेगवतीसमीपे
दीपप्रकाश इति दैवतमद्वितीयम् ॥ २

दीपस्त्वमेव जगतां दयिता रुचिस्ते
दीर्घं तमः प्रतिनिवर्त्यमिदं युवाभ्याम् ।
स्तव्यः स्तवप्रियमतः शरणोक्तिवश्यं
स्तोतुं भवन्तमभिलष्यति जन्तुरेषः ॥ ३

पद्माकरादुपगता परिषस्वजे त्वां
वेगासरिद्विहरणा कलशाब्धिकन्या ।
आहुस्तदाप्रभृति दीपसमावभास-
माजानतो मरकतप्रतिमं वपुस्ते ॥ ४

स्वामिन्गभीरसुभगं श्रमहारि पुंसां
माधुर्यरम्यमनघं मणिभङ्गदृश्यम् ।
वेगान्तरे वितनुते प्रतिबिम्बशोभा
लक्ष्मीसरः सरसिजाश्रयमङ्गकं ते ॥ ५

आविश्य धारयसि विश्वममुष्य यन्ता
शेषी श्रियः पतिरशेषतनुर्निदानम् ।
इत्यादिलक्षणगणैः पुरुषोत्तमं त्वां
जानाति यो जगति सर्वविदेष गीतः ॥ ६

विश्वं शुभाश्रयवदीश वपुस्त्वदीयं
सर्वा गिरस्त्वयि पतन्ति ततोऽसि सर्वः ।
सर्वे च वेदविधयस्त्वदनुग्रहार्थाः
सर्वाधिकस्त्वमिति तत्त्वविदस्तदाहुः ॥ ७

ज्ञानं बलं नियमनक्षमताथ वीर्यं
शक्तिश्च तेज इति ते गुणषट्कमाद्यम् ।
सर्वातिशायिनि हिमोपवनेश यस्मि-
न्नन्तर्गतो जगदिव त्वयि सद्गुणौघः ॥ ८

दीपावभास दयया विधिपूर्वमेत-
द्विश्वं विधाय निगमानपि दत्तवन्तम् ।
शिष्यायिताः शरणयन्ति मुमुक्षवस्त्वा-
माद्यं गुरुं गुरुपरंपरयाधिगम्यम् ॥ ९

सत्तास्थितिप्रयतनप्रमुखैरुपात्तं
स्वार्थं सदैव भवता स्वयमेव विश्वम् ।
दीपप्रकाश तदिह त्वदवाप्तये त्वा-
मव्याजसिद्धमनपायमुपायमाहुः ॥ १०

भोग्य मुकुन्द गुणभेदमचेतनेषु
भोक्तृत्वमात्मनि निवेश्य निजेच्छयैव ।
पाञ्चालिकाशुकविभूषणभोगदायी
सम्राडिवात्मसमया सह मोदसे त्वम् ॥ ११

त्वां मातर च पितर सहज निवास
सन्त' समेत्य शरण सुहृद गतिं च ।
नि सीमनित्यनिरवद्यसुखप्रकाश
दीपप्रकाश सविभूतिगुण विशन्ति ॥ १२

जन्तोरमुष्य जनने विधिशम्भुदृष्टौ
रागादिनैव रजसा तमसा च योग ।
द्वैपायनप्रभृतयस्त्वदवेक्षिताना
सत्त्व विमुक्तिनियत भवतीत्युशन्ति ॥ १३

कर्मस्वनादिविषमेषु समो दयालु'
स्वेनैव क्लृप्तमपदेशमवेक्षमाण ।
स्वप्राप्तये तनुभृता त्वरसे मुकुन्द
स्वाभाविक तव सुहृत्त्वमिद गृणन्ति ॥ १४

निद्रायिताभिगमवर्त्मनि चारुदर्शी
प्रस्थानशक्तिसहितान्प्रतिबोध्य जन्तून् ।
जीर्णस्तनधयजडान्धमुखानिवास्मा
न्नेतु मुकुन्द यतसे दयया सहत्वम् ॥ १५

भक्ति प्रपत्तिरथ वा भगवस्त्वदुक्ति
स्त्वच्छिष्टसश्रय इतीव विकल्प्यमानम् ।
यत्किंचिदेकमुपपादयता त्वयैव
९ त्रातास्तरन्त्यवसरे भविनो भवाब्धिम् ॥ १६

नानाविधैरकपटैरजहत्स्वभावै-
रप्राकृतैर्निजविहारवशेन सिद्धैः ।
आत्मीयरक्षणविपक्षविनाशनार्थैः
संस्थापयस्यनघजन्मभिराद्यधर्मम् ॥ १७

निम्नोन्नतानि निखिलानि पदानि गाढं
मज्जन्ति ते महिमसागरशीकरेषु ।
नीरन्ध्रमाश्रयसि नीचजनांस्तथापि
शीलेन हन्त शिशिरोपवनेश्वर त्वम् ॥ १८

काशीवृकान्धकशरासनबाणगङ्गा-
संभूतिनामकृतिसंवदनाद्युदन्तैः ।
स्वोक्त्यम्बरीषभयशापमुखैश्च शंभुं
त्वन्निघ्नमीक्षितवतामिह कः शरण्यः ॥ १९

कासौ विभुः क्व वयमित्युपसत्तिभीतान्
जन्तून्क्षणात्त्वदनुवृत्तिषु योग्ययन्ती ।
संप्राप्तसद्गुरुतनो समये दयालो-
रात्मावधिर्भवति संस्कृतधीः क्षणं ते ॥ २०

योग्यं यमैश्च नियमैश्च विधाय चित्तं
सन्तो जितासनतया स्ववशासुवर्गाः ।
प्रत्याहृतेन्द्रियगणाः स्थिरधारणास्त्वां
ध्यात्वा समाधियुगलेन विलोकयन्ति ॥ २१

पद्माभिरामवदनेक्षणपाणिपादं
दिव्यायुधाभरणमाल्यविलेपनं त्वाम् ।
योगेन नाथ शुभमाश्रयमात्मवन्तः
सालम्बनेन परिचिन्त्य न यान्ति तृप्तिम् ॥ २२

मानातिलङ्घिसुखबोधमहाम्बुराशौ
मग्नास्त्रिसीमरहिते भवतः स्वरूपे ।
तापत्रयेण विहतिं न भजन्ति सन्तः
संसारधर्मजनितेन समाधिमन्तः ॥ २३

धीसंस्कृतान्विदधतामिह कर्मभेदान्
शुद्धं जिते मनसि चिन्तयतां स्वमेकम् ।
त्वत्कर्मसक्तमनसामपि चापरेषां
धत्ते फलान्यभिमतानि भवान्प्रसन्नः ॥ २४

उद्बाहुभावमपहाय यथैव खर्वे
प्रांशु फलार्थमभियाचति योगिचिन्त्य ।
एवं सुदुष्करमुपायगणं विहाय
स्थाने निवेशयति तस्य विचक्षणस्त्वाम् ॥ २५

नित्यालसार्हमभयं निरपेक्षमन्यै-
र्विश्वाधिकारमखिलाभिमतप्रसूतिम् ।
शिक्षाविशेषसुभगं व्यवसायसिद्धाः ।
सत्कुर्वते त्वयि मुकुन्द षडङ्गयोगम् ॥ २६

त्वत्प्रातिकूल्यविमुखाः स्फुरदानुकूल्याः
कृत्वा पुनः कृपणतां विगतातिशङ्काः ।
स्वामिन्भव स्वयमुपाय इतीरयन्त-
स्त्वय्यर्पयन्ति निजभारमपारशक्तौ ॥ २७

अर्थान्तरेषु विमुखानधिकारहाने
श्रद्धाधनांस्त्वदनुभूतिविलम्बभीतान् ।
दीपप्रकाशं लभसे सुचिरात्कृतीव
न्यस्तात्मनस्तव पदे निभृतान्प्रपन्नान् ॥ २८

मन्त्रैरनुश्रवमुखेष्वधिगम्यमानैः
स्वाधिक्रियासमुचितैर्यदि वान्यवाक्यैः ।
नाथ त्वदीयचरणौ शरणं गतानां
नैवायुतायुतकलाप्यपरैरवाप्या ॥ २९

दत्ताः प्रजा जनकवत्तव देशिकेन्द्रैः
पत्याभिन भवता परिणीयमानाः ।
मध्ये सतां महितभोगविशेषसिद्ध्यै
माङ्गल्यसूत्रमिव बिभ्रति किंकरत्वम् ॥ ३०

दिव्ये पदे नियतकिंकरताधिराज्यं
दातुं त्वदीयदयया विहिताभिषेकाः ।
आदेहपातमनघः परिचर्यया ते
युञ्जानचिन्त्य युवराजपदं भजन्ति ॥ ३१

त्वां पाञ्चरात्रिकनयेन पृथग्विधेन
वैखानसेन च पथा नियताधिकाराः ।
संज्ञाविशेषनियमेन समर्चयन्तः
प्रीत्या नयन्ति फलवन्ति दिनानि धन्याः ॥३२

वर्णाश्रमादिनियतक्रमसूत्रबद्धा
भक्त्या यथार्हविनिवेशितपत्रपुष्पा ।
मालेव कालविहिता हृदयंगमा त्वा-
मामोदयत्यनुपरागधियां सपर्या ॥ ३३

ब्रह्मा गिरीश इतरेऽप्यमरा य एते
निर्धूय तान्निरयतुल्यफलप्रसूतीन् ।
प्राप्तुं तवैव पदपद्मयुगं प्रतीताः
पातिव्रतीं त्वयि वहन्ति परावरज्ञाः ॥ ३४

नाथ त्वदिष्टविनियोगविशेषसिद्ध
  शेषत्वसारमनपेक्ष्य निजं गुणज्ञाः ।
भक्तेषु ते वरगुणार्णव पारतन्त्र्या-
  द्दास्यं भजन्ति विपणिव्यवहारयोग्यम् ॥ ३५

सद्भिस्त्वदेकशरणैर्नियत सनाथाः
  सर्पादिवत्त्वदपराधिषु दूरयाताः ।
धीरास्तृणीकृतविरिञ्चपुरंदराद्या
  कालं क्षिपन्ति भगवन्करणैरवन्ध्यैः ॥ ३६

वागादिकं मनसि तत्पवने स जीवे
  भूतेष्वयं पुनरसौ त्वयि तैः समेति ।
साधारणोत्क्रमणकर्म समाश्रितानां
  पन्था मुकुन्द भवतैव यथा यमादेः ॥ ३७

सव्यान्ययोरयनयोर्निशि वासरे वा
  संकल्पितायुरवधीन्सपदि प्रपन्नान् ।
हार्दः स्वयं निजपदे विनिवेशयिष्य-
  न्नाडीं प्रवेशयसि नाथ शताधिकां त्वम् ॥ ३८

अर्चिर्दिनं विशदपक्ष उदक्प्रयाणं
  संवत्सरो मरुदशीतकरः शशाङ्कः ।
सौदामनी जलपतिर्बलजित्प्रजेशः
  इत्यातिवाहिकसखो नयसि स्वकीयान् ॥ ३९

त्वच्छेषवृत्त्यनुगुणैर्महितैर्गुणौघै-
  राविर्भवत्यपृथगसिद्धनिजस्वरूपे ।
त्वल्लक्षणेषु नियतेष्वपि भोगमात्रे
  साम्यं भजन्ति परमं भवता विमुक्ताः ॥ ४०

कर्मादिषु त्रिषु कथा कथमप्यजानन्-
कामादिमेदुरतया कलुषप्रवृत्तिः ।
साकेतसंभवचराचरजन्तुनीत्या
वीक्ष्य प्रभो विषयवासितयाप्यहं ते ॥ ४७

ब्रह्माण्डलक्षशतकोटिगणाननन्ता-
नेकक्षणे विपरिवर्त्य विलज्जमानाम्
मत्पापराशिमथने मधुदर्पहन्त्रीं
शक्तिं नियुङ्क्ष्व शरणागतवत्सल त्वम् ॥ ४८

आस्तां प्रपत्तिरिह देशिकसाक्षिका मे
सिद्धा तदुक्तिरनया त्वदपेक्षितार्था ।
न्यस्तस्य पूर्वनिपुणैस्त्वयि नन्विदानीं
पूर्णे मुकुन्द पुनरुक्त उपाय एष ॥ ४९

यद्वा मदर्थपरिचिन्तनया तवाल
सन्नाप्रपन्न इति साहसिको बिभर्मि ।
एवं स्थिते त्वदपवादनिवृत्तये मां
पात्रीकुरुष्व भगवन्भवतः कृपायाः ॥ ५०

त्यागे गुणेश शरणागतसंज्ञिनो मे
स्त्यानागसोऽपि सहसैव परिग्रहे वा ।
किं नाम कुत्र भवतीति कृपादिभिस्ते
गूढं निरूपय गुणेतरतारतम्यम् ॥ ५१

स्वामी दयाजलनिधिर्मधुरः क्षमावान्
शीलाधिकः श्रितवशः शुचिरस्युदारः ।
एतानि हातुमनघो न किलार्हसि त्वं
विख्यातिमन्ति विरुदानि मया सहैव ॥ ५२

वेलाधनंजयरथादिषु वाचिकैः स्वै-
राघोषितामखिलजन्तुशरण्यतां ते ।
जानन्दशाननशतादधिकागसोऽपि
पश्यामि दत्तमभयं स्वकृते त्वया मे ॥ ५३

रक्ष्यस्त्वया तव भरोऽस्म्यहमित्यपूर्वान्-
वर्णानिमानहृदयानपि वाचयित्वा ।
मद्दोषनिर्जितगुणो महिषीसमक्षं
मा भूस्त्वदन्य इव मोघपरिश्रमस्त्वम् ॥ ५४

मुख्यं च यत्प्रपदनं स्वयमेव साध्यं
दातव्यमीश कृपया तदपि त्वयैव ।
तन्मे भवच्चरणसङ्गवतीमवस्थां
पश्यन्नुपायफलयोरुचितं विधेयाः ॥ ५५

अल्पास्थिरैरसुकरैरसुखावसानै-
र्दुःखान्वितैरनुचितैरभिमानमूलैः ।
प्रत्यक्परागनुभवैः परिघूर्णितं मां
त्वय्येव नाथ चरितार्थय निर्विविक्षुम् ॥ ५६

तत्त्वावबोधशमितप्रतिकूलवृत्तिं
कैंकर्यलब्धकरणत्रयसामरस्यम् ।
कृत्वा त्वदन्यविमुखं कृपया स्वयं मां
स्फार्ति दृशोः प्रतिलभस्व जगज्जनन्याः ॥५७

इत्थं स्तुतिप्रभृतयो यदि संमताः स्यु-
र्यद्वापराधपदवीष्वभिसंविशन्ति ।
स्तोकानुकूल्यकणिकावशवर्तिनस्ते
प्रीतिक्षमाप्रसरयोरहमस्मि लक्ष्यम् ॥ ५८

स्नेहोपपन्नविषयः स्वदशाविशेषाद्
भूयस्तमिस्रशमनीं भुवि वेङ्कटेशः ।
दिव्यां स्तुतिं निरमिमीत सतां नियोगात्
दीपप्रकाशशरणागतिदीपिकाख्याम् ॥ ५९

—०—

॥ शरणागतिदीपिका संपूर्णा ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

# श्रीमद्वेदान्तदेशिकमंगलाशासनम्

—:o:o:—

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्ता सदा हृदि ॥
श्रीमल्लक्ष्मणयोगीन्द्र, सिद्धान्तविजयध्वजम् ।
विश्वामित्रकुलोद्भूत वरदार्यमह भजे ॥

सर्वतन्त्रस्वतन्त्राय सिंहाय कविवादिनाम् ।
वेदान्ताचार्यवर्याय वेङ्कटेशाय मङ्गलम् १

नभस्यमासिश्रोणायामवतीर्णाय सूरये ।
विश्वामित्रान्वयायास्तु वेङ्कटेशाय मङ्गलम् २

पिता यस्याऽनन्तसूरिः पुण्डरीकाक्षयज्वनः ।
पौत्रो यस्तनयस्तोता-रम्बायास्तस्य मङ्गलम् ३

वेङ्कटेशावतारोऽयं तद्घण्टांशोऽथवा भवेत् ।
यतीन्द्रांशोऽथवेत्येव वितर्क्यायास्तु मङ्गलम् ४

श्रीभाष्यकारः पन्थानमात्मना दर्शितं पुनः ।
उद्धर्तुमागतो नून-मित्यूह्यायाऽस्तु मङ्गलम् ५

यो बाल्ये वरदार्यस्य प्राचार्यस्य परां दयाम् ।
अवाप्य वृद्धिं गमित स्तस्मै योग्याय मङ्गलम् ६

रामानुजार्यादात्रेयान्मातुलात्सकलाः कलाः ।
अवाप विंशत्यब्दे यस्तस्मै प्राज्ञाय मङ्गलम् ७

श्रुतप्रकाशिका भूमौ येनादौ परिरक्षिता ।
प्रवर्तिता च पात्रेषु तस्मै श्रेष्ठाय मङ्गलम् ८

सांस्कृतीभिर्द्राविडीभिर्बह्वीभि कृतिभिर्जनान् ।
य समुज्जीवयामास तस्मै सेव्याय मगलम् ९

य. ख्यातिलाभपूजासु विमुखो वैष्णवे जने ।
क्रयणीयदशा प्राप्तस्तस्मै भव्याय मङ्गलम् १०

यस्मादेव मया सर्वं शास्त्रमग्राहि नान्यतः ।
तस्मै वेङ्कटनाथाय मम नाथाय मगलम् ॥११

पित्रे ब्रह्मोपदेष्ट्रे मे गुरवे दैवताय च ।
प्राप्याय प्रापकायास्तु वेङ्कटेशाय मगलम् ॥ १२

य' कृत वरदार्येण वेदान्ताचार्यमगलम् ।
आशास्तेऽनुदिन सोपि भवेन्मगलभाजनम् ॥१३

---

भाद्रपदमासगतविष्णुविमलर्क्षे
वेङ्कटमहीध्रपतितीर्थदिनभूते ।
प्रादुरभवज्जगति दैत्यरिपुघण्टा
हन्त कवितार्किकमृगेन्द्रगुरुमूर्त्या ॥ १४

सशङ्खचक्रलाञ्छन सदूर्ध्वपुण्ड्रमण्डित
सकण्ठलग्नसत्तुलस्यनर्घपद्ममालिक ।
सितान्तरीयसोत्तरीययज्ञसूत्रशोभितो
ममाविरस्तु मानसे गुरुस्स वेङ्कटेश्वर ॥ १५

अनन्तसूरिसूनवेऽभिनन्द्यमानवैभवा-
द्दिगन्तवादिहंसजैत्रकालमेघदेशिकात् ।
उपात्तसर्वशास्त्रनाय हन्त वर्षविंशतौ
पुनः पुनर्नमस्क्रियाऽस्तु वेङ्कटेशसूरये ॥ १६

गुरौ वादिहंसाम्बुदाचार्यशिष्ये
जना भक्तिहीना यतीन्द्राप्रियाः स्युः ।
यतीन्द्राऽप्रिया विष्णुकारुण्यदूराः
कुतो मुक्तिवार्त्ता हि तादृग्विधानाम् ॥ १७

कवितार्किककलभव्रजकवलीकृतिसिंहं
कमलापतिकरुणारसपरिवर्द्धितबोधम् ।
यतिनायक पदपङ्कजयुगलीपरतन्त्रं
भज मानस ! बुधवेङ्कटपतिदेशिकमनिशम् ॥ १८

वेदे सञ्जातखेदे मुनिजनवचने प्राप्तनित्यावमाने
सङ्कीर्णे सर्ववर्णे सति तदनुगुणे निष्प्रमाणे पुराणे ।
मायावादे समोदे कलिबलवशतश्शून्यवादे विवादे
धर्मत्राणाय योऽभूत्स जयतु भगवान्विष्णुघण्टावतारः ॥ १६

॥ श्री मद्वेदान्तदेशिकमङ्गलाशासनं सम्पूर्णम् ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥

---

श्रीमते रामानुजाय नमः

# श्रीमद्वेदान्तदेशिकप्रपत्तिः

श्रीमल्लक्ष्मणयोगीन्द्रसिद्धान्तविजयध्वजम् ।
विश्वामित्रकुलोद्भूतं वरदार्यमहं भजे ॥

विद्वन्मतङ्गजशिखाभरणायमानौ,
विश्वातिशायिमहिमाम्बुनिधानभूतौ ।
विद्वेषिवादिमुकुटीकृतकुङ्कुमौ तौ
वेदान्तसूरिचरणौ शरणं प्रपद्ये ॥ १

विश्वम्भरामतितरामपि भावयन्तौ
विन्यासतो विविधसज्जनतानुभाव्यौ ।
विस्तारसंसृतिमहार्णवकर्णधारौ
वेदान्तसूरिचरणौ शरणं प्रपद्ये ॥ २

विध्वन्तरान्धतमसक्षपणप्रवीणौ
विद्योतमाननखरेन्दुमयूखजालैः ।
विख्याततामरसशङ्खरथाङ्गचिह्नौ
वेदान्तसूरिचरणौ शरणं प्रपद्ये ॥ ३

विद्वेषमानमदमत्सरविद्विषौ यौ
विष्णवालयानुगमनोत्तमनित्यकृत्यौ ।
वेदान्तवृद्धविहिताञ्जलिगोचरौ तौ
वेदान्तसूरिचरणौ शरणं प्रपद्ये ॥ ४

विष्वर्पितात्मजनभाग्यविपाकभूतौ
विभ्राजमाननवकोकनदानुकल्पौ ।
वेपान्तरोपगतपल्लवतल्लजौ तौ
वेदान्तसूरिचरणौ शरणं प्रपद्ये ५

वेधोमुखैरपि सुरैर्विहितप्रणामौ
वेलातिलङ्घिसुषुमासुकुमारभावौ ।
विस्मेरकेसरलसन्मृदुलाङ्गुलीकौ
वेदान्तसूरिचरणौ शरणं प्रपद्ये ॥ ६

विद्रावितोद्भटविकाररजोगुणौ तौ
विख्यातभूरिविभवेन रजःकणेन ।
विश्वोपकारकरणाय कृतावतारौ
वेदान्तसूरिचरणौ शरणं प्रपद्ये ॥ ७

विष्वङ्घ्रिनिर्गतसरित्प्रवरानुभावौ
विद्याविनीतजनितैर्विमलैस्वतीर्थैः ।
व्यानम्रशिष्यजनरक्षणजागरूकौ
वेदान्तसूरिचरणौ शरणं प्रपद्ये ॥ ८

वीथीषु रङ्गनगरे कृतचङ्क्रमौ तौ
विष्णूत्सवेषु विधिवासवसेवितेषु ।
विद्याविनीतजनताविहितानुसारौ
वेदान्तसूरिचरणौ शरणं प्रपद्ये ॥ ९

विश्वासविष्णुपदभक्तिविरक्तिशून्यं
विभ्रष्टकृत्यमपि मां विषयेषु सक्तम् ।
विद्वत्सभानुगतियोग्यमिहादधानौ
वेदान्तसूरिचरणौ शरणं प्रपद्ये ॥ १०

—o—

इति श्रीनयिनाराचार्यविरचिता श्रीमद्वेदान्त
देशिकप्रपत्तिः सम्पूर्णा ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

# श्रीमद्वेदान्तदेशिकदिनचर्यास्तोत्रम्

श्रीमल्लक्ष्मणयोगीन्द्रसिद्धान्तविजयध्वजम् ।
विश्वामित्रकुलोद्भूत वरदार्यमह भजे ॥

---

काञ्चीपुरी यस्य हि जन्मभूमि
विहारभूर्वेङ्कटभूधरेन्द्र ।
वासस्थली रङ्गपुरी तमीड्य
श्रीवेङ्कटेश गुरुमाश्रयाम ॥ १

सम्भावना यस्य हि कालकूट-
रसभा भुजङ्गी कुणप तरुण्य ।
स्याद्रौरव राजगृह स जीया
ञ्चिर गुरुर्वेङ्कटनाथनामा ॥ २

य प्रातरभ्येत्य हरिं शुचीनि
द्रव्याण्युपादाय शुचि कृतेज्य ।
स्वाध्याययुक्तो निशि योगरूपा
निद्रा समारोहति त नतास्स्म ॥ ३

यामे तुरीये यतवाग्रजन्या
विहाय शय्या विहिताङ्घ्रिशुद्धि ॥
योऽन्त्यादरेणास्थितयोगशेष
स्त वेङ्कटेशं गुरुमानमाम ॥ ४

ततोऽनुसन्धाय तति गुरूणां
तच्चापि देव रमण रमाया ।
तत्कालयोग्यानि तथाविधानि
हृद्यानि पद्यानि पठन्तमीडे ॥ ५

उत्थाय गेहादुपगम्य रम्यां
कवेरकन्यां कलिताङ्घ्रिशुद्धिः ।।
ततो विशोध्याप्सु निमज्ज्य शुभ्रं
वस्त्रं वसानं तमहं स्मरामि ।। ६

धृत्वोर्ध्वपुण्ड्राणि सरोजबीज
मालामवन्ध्यां समुपास्य संध्याम् ।
सावित्रमीशं सवितुः पुरस्तात्-
स्तुवन्तमेकाग्रधिया स्तुवे तम् ।। ७

ततः सुपूर्वाह्णिकनित्यकर्म
निर्वर्त्य नित्येष्टनिवृत्तिमार्गः
श्रीरङ्गधामोपसमेत्य सेवा-
क्रमेण रङ्गेश्वरपादमूलम् ।। ८

प्राबोधिकीभिः प्रतिबोध्य गीर्भिः
प्रसाद्य तद्गद्यमुखैः प्रबन्धैः ।
आशास्य तन्मङ्गलमाप्तवाक्यै
रापादचूडं कलयन्तमीडे ।। ९

तीर्थप्रसादादिकमत्र लब्ध्वा
विज्ञाप्य देवाय ततो विसृष्टः ।
शनैरुपेत्याश्रमकल्पमात्म
गेहं सुखासीनमहं स्मरामि ।। १०

व्याख्यानशालामुपगम्य चाथो
शिष्याननन्यान् श्रवणाभिमुख्यान् ।
संग्राहयन्तं सकलानि तन्त्रा-
ण्यतन्द्रितं तं गुरुमाश्रयेऽहम् ।। ११

वास्संस्कृतद्राविडदिव्यसूक्ती
प्रसन्नगम्भीरतया प्रसिद्धा ।
तत्तद्रुचिभ्यस्तनयाविशेष
प्रणौमि दान्त प्रतिपादयन्तम् ॥ १२

शिष्यैरुपादानपरैरनन्यै
समर्पित भक्तिपुरस्सर यत् ।
तेनैव शुद्धेन यथोदितेन
तुष्यन्तमीडे तुषतुल्यरुक्मम् ॥ १३

इत्थ ह्युपादाय च शास्त्रशिक्षा
तान्याप्युपादानपदे निवेश्य ।
माध्याह्निक कर्म समाप्य पश्चा-
द्वन्देयजन्त वरद सदारम् ॥ १४

अतस्करग्राह्यपवित्रपात्रै-
रनिन्द्रियोन्मादकरैर्हविर्भि ।
आराध्य देव कमलासहाय-
माराधये त विहितानुयागम् ॥ १५

यामे चतुर्थे निहतारिवर्ग-
प्रबन्धनिर्माणविलोकनाद्यैः ।
तथा पुराणाद्यवलोकनैश्च
काल क्षिपन्त कलये गुरु तम् ॥ १६

सायन्तन कर्म समाप्य पश्चात्-
समेत्य च श्रीवरदाह्वयस्य ।
सहान्तरङ्गै कुलदैवतस्य
समीपमाराद्रणत स्मरामि ॥ १७

# सप्ततिरत्नमालिका

वेदान्तदेशिककटाक्षविवृद्धिबोधविद्वज्जनेऽन्यपरदार्यं दयैकपात्रम् ।
तत्सूक्तिलेशविभवात्तसमस्ततत्व भक्त्या भजामि परवादिभयङ्करार्यम्

—:०:—

इत्येवमेतामिह सर्वतन्त्र-
स्वतन्त्रवेदान्तगुरुत्तमस्य ।
नित्याभिजप्या शुभनित्यचर्या
जपन्ति ये ते दुरित तरन्ति ॥ २३

—. ० :—

इति श्रीनयिनाराचार्यकृतिषु श्रीमद्वेदान्तदेशिक-
दिनचर्यास्त्रोत्रं सम्पूर्णम् ।

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवेनम ॥

श्रीमते निगमान्तमहादेशिकाय नम ॥

—— ० ० ——

# सप्ततिरत्नमालिका

वेदान्तदेशिककटाक्षविवृद्धिबोधविद्वज्जनेड्यवरदार्य दयैकपात्रम् ।
तत्सूक्तिलेशविभवात्तसमस्ततत्व भक्त्या भजामि परवादिभयङ्करार्यम् ॥

—:०:—

जीवनं जगतां जीयात् किमप्यपगतस्पृहम् ।
स्वतन्त्रं सर्वतन्त्रेषु वेङ्कटेशाह्वयं महः ॥ १

शोश्रूयमाणा यच्छब्दं कवितार्किक कुञ्जराः ।
स्वप्ने प्रसुस्रुवुर्नित्यं सिंहं कमपि तं भजे ॥ २

श्रीमतां हरिदासानां पादरक्षावलम्बिना ।
तेन वेङ्कटनाथेन सनाथास्सुखिनोवयम् ॥ ३

वेदान्तदेशिकपदं यस्मै श्रीरङ्गशायिना ।
दत्तं तस्मै नमस्कुर्मो वेङ्कटेशविपश्चिते ॥ ४

दक्षिणोत्तरदेशीय सूक्त्या वरददेशिकः ।
यस्मादजनि सोदर्यस्त स्मान्नान्यागतिर्मम ॥ ५

ज्ञानं तु विनयो भक्तिस्संपत्तिर्वीतरागता ।
आरोग्यं यस्य तस्यास्मि दासो वेदान्तसद्गुरोः ॥ ६

यस्मिन्ननन्यसामान्या वेदान्ताचार्यता गुरौ ।
यथा पुरुपता विष्णौतस्मिन्न्यस्तभरोस्म्यहम् ॥ ७

सर्वतन्त्रस्वतन्त्रत्वात् शास्त्रदीपप्रदानतः ।
श्रीवेङ्कटाद्रिनाथोऽसौ साक्षाद्वेदान्तदेशिकः ॥ ८

आविर्भूतिर्यस्य वशादनघांत्
वैश्वामित्राद्विष्णुघण्टांशकस्य ।
श्रीमान् सोऽय सर्वतन्त्रस्वतन्त्रो
वक्ता व्याख्यासार्वभौमो विभाति ॥ ९

भाद्रपदमासगतविष्णुविमलर्क्षे
वेङ्कटमहीध्रपतितीर्थदिनभूते ।
प्रादुरभवज्जगति दैत्यरिपु घण्टा
हन्तकवितार्किकमृगेन्द्रगुरुमूर्त्या ॥ १०

तमिम श्रीमद्वेङ्कट
नाथाचार्य वदन्ति किलसन्त ।
श्रीवेङ्कटाद्रिनाथ
सदसद्गुणराशियोगहानिभ्याम् ॥ ११

श्रीभाष्य विरचय्यसयमिवरो जित्वा स्वय वादिनो
बाह्यांश्चापि कुदृष्टिकान् भुवि पुनर्भाष्यप्रतिष्ठाशया ।
श्रीमद्वेङ्कटनाथदेशिकशिरोरत्नात्मनाविर्बभा
वित्येव च वदन्ति हन्त कृतिनस्त्रैकालिकज्ञानिन ॥ १२

अवनाय सतामसद्गुण-
प्रबलाटोपनिबर्हणाय च ।
अपिवैष्णवधर्मवृद्धये
जनन श्रीनिगमान्तसद्गुरो ॥ १३

यद्यय हि कवितार्किकसिंहो
नाभविष्यदिह शुभ्यवतीर्ण ।
तर्हि बाह्यकुदृगुद्धतपक्षै
मेदिनी परिवृता ह्यभविष्यत् ॥ १४

वेङ्कटेश्वरविपश्चिति जाते
  निस्सपत्नमभवत्किल भाष्यम् ।
तत्त्वमप्रतिहतं च तदासी-
  द्येन मोक्षपदवी सुखलभ्या ॥ १५

पुत्रोऽनन्तार्यसूरेः पुरुषसमगुणः पुण्डरीकाक्षयज्वः
  पौत्रस्तोतारभिख्याश्रुतवरजननीगर्भवाराशिचन्द्रः ।
विश्वामित्रान्ववायो वरदगुरुपिता वादिहसाम्बुवाहा-
  दाचार्यादात्तशास्त्रो वरदगुरुमतस्सर्वतन्त्रस्वतन्त्रः ॥ १६
अनन्तसूरिसूनवेऽभिनन्द्यमानवैभवात्

  दिगन्तवादिहंसजैत्रकालमेघदेशिकात् ।
उपात्तसर्वशासनाय हन्त वर्षविंशतौ
  पुनः पुनर्नमस्क्रियास्तु वेङ्कटेशसूरये ॥ १७

वेदान्ताचार्यवर्यो विदितबहुगुणो वीतरागाग्रयायी
  विद्वान् विद्यानिषद्यान्निरचितविविधानेकदिव्यप्रबन्धः ।
विष्णौ विष्ण्वाश्रितेषु प्रकटितविनयप्रेमशेषत्ववृत्तिः
विख्यातः श्रेयसे स्याद्विषयजिदिह नो वेङ्कटाचार्यवर्यः ॥ १८

यः संस्कृतकवितायां
  प्रौढिम्नान्वेति कूरनाथसुतम् ।
द्राविडकवितामार्गे
  परकालं वाथ भक्तिसारं वा ॥ १६

परश्शतं वापि परस्सहस्रं
  श्रीवेङ्कटाचार्यकृताः प्रबन्धाः ।
तत्रालमेकः खलु भुक्तिमुक्त्योः
  कात्स्न्र्येन कस्तान् गणयेत्समस्तान् ॥ २०

यदीयचरित सता सुचरितव्यवस्थापक
  यदीयवचन पर सकलसंशयोन्मूलनम् ।
यदीयकरुणागतिस्सकलधर्मशून्यात्मनां
  स नश्शरणमस्त्वसौ सकलतन्त्रनिर्वाहक ॥ २१

दान्तिश्शान्तिश्शुचित्व विषयविजयिता धीरता निस्पृहत्व
  शेषत्व श्रीशतद्दासजनविषयक पारतन्त्र्य च तत्र ॥
अक्षोभ्यत्व पटुत्व मृदु समवशितानिर्भिरत्वानसूये
  यस्मिन्नाजानसिद्ध स खलुविजयते वेङ्कटाचार्यवर्य २२

कलये सतत करुणाजलधिं
  करुणाविषय कमलाधिपते ॥
कलिवैरिशठारिवचोरसिक
  कवितार्किककेसरिसूरिगुरुम् ॥ २३

सरोभूतवेतालसारस्वतानां
  शठद्विट्कलिघ्नसिमुख्योदितानाम् ।
अविच्छिन्न सत्सम्प्रदायार्थवेदी
  गुरुर्वेङ्कटेशो गुरूक्तिष्वतुल्य ॥ २४

युक्ता अलूक्षा अपि धर्मकामा
  संमर्थिनो युक्तिसमन्विताश्च ।
सद्ब्राह्मणा वेदशिर प्रसिद्धा
  श्रीवेङ्कटाचार्यमुखा हि नूनम् ॥ २५

जटावर्ण चर्चाद्यनेकप्रकार
  त्रयीलक्षणोच्चारणे व्यासकल्प ।
तथा कल्पसूत्रप्रयोगाद्यभिज्ञो-
  जयत्यन्वह सर्वतन्त्रस्वतन्त्र ॥ २६

भरद्वाजशाण्डिल्यहारीतमुख्य
स्मृतिस्तोमसूक्ष्मार्थनिर्णीतिदक्षः ।
पुराणागमादिष्वसाधारण श्री
स्सुतो भाति लोकेष्वनन्तार्यसूरेः ॥ २७

ज्योतिश्छन्दश्शब्दशास्त्रप्रवीणः
काव्यश्रेणीनाटकालङ्कृतिज्ञः ॥
मीमांसाया ब्रह्मकर्मानुगाया
स्रष्टा साक्षात्सर्वतन्त्रस्वतन्त्रः ॥ २८

साङ्ख्ये योगे भाट्टतन्त्रे गुरूक्ते
शैवे जैने शाङ्करे भास्करे च ।
शास्त्रे बौद्धे यादवे गर्वितानां
प्रत्याख्याता सर्वतन्त्रस्वतन्त्रः ॥ २९

सर्वोज्जीवनचिन्तया घटकता भावेन दानात् कृति-
श्रेष्ठानां बहुशस्तदुद्धरणतस्त्रय्यन्तसंरक्षणात् ।
श्रीमच्छ्रीशठकोपमुख्यदिविषन्नाथार्यरामानुजा-
चार्यानप्यनुयाति हन्तनिगमान्ताचार्यचूडामणिः ॥३०

इह रङ्गपतिप्रसादलब्धो-
भयवेदान्तधुरन्धरत्वकीर्तिः ।
अपि तत्सहधर्मिणीकृपात्ता-
खिलतन्त्रप्रभुताक एष सूरिः ॥ ३१

अखिलतन्त्रधुरन्धरता हरेः
त्वयि तु वेङ्कटनाथगुरौस्थिता ।
विधिशिवादिजनेष्वितरेषु वा
क्वचिदपीह न सा परिदृश्यते ॥ ३२

क्षमाया ह्रियस्योपमान मुकुन्द
श्रुतौ तस्य तल्पोमतौ देवमन्त्री ।
जये वैरिणा दैत्यसहारकारी
सजीयाच्चिर सर्वतन्त्रस्वतन्त्र ॥ २३

आचार्यत्वोपयुक्ता मुनिगणकथिता देशिकैस्स्वेन चोक्ता॰
सर्वे भद्रा गुणास्स्युस्समुदितविभवास्सर्वतन्त्रस्वतन्त्रे ।
शिष्यत्वे चोपयुक्ता अपि च गुणगणा कूरनाथे यथा स्यु
नान्यत्राचार्यवर्गे कतिचन हि गुणा प्रायशस्तत्र दृष्टाः ॥२४

यतिपतिसम्प्रदायपरिपोषकस्य
निगमान्त देशिकमणे ।
अतिपतितामृता सरसता
गुणेन सुमनस्स्रजो मृदुतरा ।
अधिगतलक्षणा विमलसूक्ति
रार्तिशमनी विपक्षमथनी ।
कलयतु नश्शुभानि भगवत्तदीय-
यतिराजहर्षजननी ॥ २५

अपि च भवाहिदष्टपरिमूर्छितस्य
भविन प्रबोधनकरी ।
शमदमदोपभीतिभगवत्तदीय
जनभक्ति मुक्तिजननी ।
विजयपरत्वकोपमदमोहलोभ
शठतादिदोषशमनी ।
स्तुविसदृशीतरास्ति नहिसूक्तिरस्य
निगमान्तदेशिकगिर ॥ २६

कर्मविचिकित्सा वृत्तविचिकित्सा
धर्मविचिकित्सा सर्वविचिकित्सा ।
शाम्यति हि नूनं सर्वपुरुषाणां
वेङ्कटविपश्चिद्वाग्विलसितेन ॥ ३७

यदुक्तयो यतिपतितन्त्रदीपिकाः
सलक्षणास्सरसतमास्सतां मताः ।
समत्सरैरपि सततं परोक्षतः
प्रशंसिताः परिकलयेत्सनः श्रियम् ॥ ३८

वाणी यस्यद्रामिडी सांस्कृती च
प्रायःप्राचामाशयानन्ववादीत् ।
अर्वाचामप्यास वैयात्यमूल-
जीयात्सोऽयं सर्वतन्त्रस्वतन्त्रः ॥ ३९

यदीयकृतिषुक्षणं परिचितिस्सतां चातुरीं
तनोति बहुवत्सरश्रममनुस्रु तामन्यतः ।
तमद्ययतिभूपति प्रथितसन्मतोद्धारकं
भजे कविकथारतद्विरदवृन्दकण्ठीरवम् ॥ ४०

कविवादिकरिसिंह कृतिरत्नतिलकं
यतिराजवरसप्ततिमिमामनुदिनम् ।
प्रवदन्ति परवादितिमिरौघमिहिराः
त इमे हि यतिराजकरुणैकविषयाः ॥ ४१

वेङ्कटेशविदुषारचितानां
ज्ञायते न गणनापि कृतीनाम् ।
तत्रचापि नहिरङ्गपतिश्री-
पादुकास्तुतिसहस्रसमाऽन्या ॥ ४२

वेङ्कटेश्वरगुरुग्रथितं ये
पादुकास्तुति सहस्रमजस्रम् ।
सार्थबोधमनुसदधते ते
सयमीन्द्रमतसारविद स्स्यु ॥ ४३

अनन्यसाधारणचातुरी च
काव्यादिषु ब्रह्मविदग्रणीत्वम् ।
तथाष्टभाषा कवितापटुत्व
सकल्पसूर्योदयदृश्यमस्य ॥ ४४

दूषण्यादौ तार्किकाग्रेसरत्व
स्पष्ट श्रीमद्वेङ्कटेशस्य सूरे ।
अन्यालभ्या चातुरी पद्यगुम्भे
सर्वज्ञत्व तत्त्वमुक्ताकलापे ॥ ४५

कलयता कवितार्किककेसरि
प्रकटिता शतदूषणिकाहृदि ।
मशकवत्सुजया खलुमायिन
प्रणिपतन्ति परपदयोर्मुहु ॥ ४६

अहह शङ्करयादवभास्कर
प्रथितदुर्मतदुर्मदवादिनाम् ।
कलकल कवितार्किककेसरि
प्रथितदूषणिकाश्रवणावधि ॥ ४७

सर्वार्थसिद्धिश्शतदूषणी च
द्वे खेटशस्त्रे कथकाग्रगानाम् ।
आद्येन तत्र क्रियते स्वरक्षा
प्रत्यर्थिभङ्ग कलहेऽन्यतस्स्यात् ॥ ४८

अतएव सर्वजगतांसगुरुः
यति चक्रवर्ति मतमत्तदिग्गजः ।
कवितार्किक द्विरदपञ्चमुखो-
ह्यतऊर्जितं ह्यकृतभाष्यमिदम् ॥ ४९

श्रुतिशीर्षदेशिकशिरोमणिना
जनकेन येन हि सुशिक्षितधीः ।
वरदोगुरुश्च यतिराजमत-
प्रतिवादिकोटिशतकोटिरभूत् ॥ ५०

सर्वतन्त्रधूर्वहस्य वेङ्कटेशधीमतः
कुर्वतेऽवमाननां तु केचनाधुनोद्भवाः ।
हन्त हन्त रामकृष्णदूषणाभिधायिनां
किंतु चित्रमत्र चैव रावणानुसारिणाम् ॥ ५१

अपिकाममदलोभ शठतादिरहिता
अपि नीतिधृतिशान्ति मतिदान्ति सहिताः ।
यतिराजमतधुर्यपदपद्मविमुखा
अवलोकनातिमानमुति बाह्यविषयाः ॥ ५२

विमति रथव्रातेषां युक्तायतीश्वरजीवने
कविकथकपञ्चास्ये देवेसतां च धुरन्धरे ।
परिचिति रहोतन्माहात्म्यप्रकाशकतत्कृति-
ष्वपि लवमिता स्वनेप्येषां यतोनहिविद्यते ॥ ५३

न द्रष्टारो वैभवस्यास्य साक्षात्
नैवाभ्यासस्तत्कृतिष्वस्ति येषाम् ।
येषां नित्यं मानसं साभ्यसूयं
तेषां भक्तिस्स्यात्कथं वेङ्कटेशे ॥ ५४

गुरौ वादिहंसाम्बुदाचार्यशिष्ये
जना भक्तिहीना यतीन्द्राप्रियास्तु ।
यतीन्द्राप्रिया विष्णुकारुण्यदूरा
कुतो मुक्ति वार्ताहिताद्विधानाम् ॥ ५५

नि श्रेयस येऽभिलपन्ति तस्य
मूल कृपा चापिरमासखस्य ।
दयां यतीन्द्रस्य हि तैरवश्य
कार्याहि भक्ति कविवादिसिंहे ॥ ५६

सेवा विष्णोर्वैष्णवाराधनान्ता
तद्वत्सेवा स्वामिन स्सयमीनाम् ।
वेदान्ताचार्याङ्घ्रिपद्मार्चनान्ता
यस्मादात्मा वेङ्कटेशस्य सूरे ॥ ५७

कर्माद्युपायाइहकेचनस्यु
केचिच्चलक्ष्मीरमणाङ्घ्र्युपाया ।
श्रीमद्यतीन्द्र प्रियवेङ्कटेश
गुर्वङ्घ्र्युपायावयमेवधन्या ॥ ५८

सशङ्खचक्रलाञ्छनस्सदूर्ध्वपुण्ड्र मण्डित
स्स कण्ठलग्न सत्तुलस्यनर्घपद्ममालिक ।
सितान्तरीयसूत्तरीय यज्ञसूत्र शोभितो
ममा विरस्तु मानसे गुरुस्स वेङ्कटेश्वर ॥ ५९

निगमान्तदेशिकपदाम्बुजद्वय
निरवद्यवैष्णवजनप्रिय धनम् ।
कुलदैवत मम कुदृष्टिमस्तक
क्षितिभृद्विभेदि कुलिशायुधायितम् ॥ ६०

महोत्पलायितपाद युगलं
रतिप्रियेपुधि रोधिसुजङ्घिकम् ।
ककुत्समानसुजानुक मञ्चित-
स्फुरत्कटीविलसत्परिधानकम् ॥ ६१

प्रशस्तनाभिकमुज्ज्वलवक्षस
प्रसन्न सस्मित सन्मुखपङ्कजम् ।
मदीयहृत्कमलासन संस्थितं
भजामि वेङ्कटनाथ विपश्चितम् ॥ ६२

प्रबुद्धतामरसाभविलोचनं
प्रसिद्ध शिष्यजनैः परिवारितम् ।
प्रवृद्धरागतमं गुरुपादयोः
प्रबुद्ध चेतसमर्थसमर्थने ॥ ६३

सरत्नकम्बलपीठ परिग्रह
समर्थमुत्थित संशयनोदने ।
विरक्त सज्जन संघशिरोमणि
भजामि वेङ्कटनाथ विपश्चितम् ॥ ६४

कवितार्किक कलभव्रजकवलीकृतिसिंह
कमलापतिकरुणारसपरिवर्धित बोधम् ।
यतिनायकपदपङ्कजयुगली परतन्त्रं
भजमानसबुधवेङ्कटपतिदेशिकमनिशम् ॥ ६५

यति नृपतिपदकमलसकलविधबन्धुं
करिशिखरिपति नगर सुचिरकृतवासम् ।
भज हृदय कविकथक हरिमपिच रङ्ग-
क्षितिरमणचरणयुगसततकृतसेवम् ॥ ६६

अतिमृदुलमनसमति विपुल शुभनेत्रम्
अतिचतुरमधिकगुणयतिनृपतिभाष्ये ।
उपकरणपरमनिशमयकरणशीले
त्वपिकलय मम हृदय कविकथक सिंहम् ॥ ६७

भोनिगममौलियुगदेशिकदयामृतसमुद्र भगवन्
मामकमिद वचनमद्य शृणु नाथ कवितार्किक हरे ।
सोऽह मति खिन्नमिह वीक्ष्य जनमत्र भवदङ्घ्रि विमुख
त्व च कुरुतावकपदाम्बुजयुग प्रवणमद्य कृपया ॥ ६८

किंच मम मानसमिदच समुदञ्चितमिहान्यविषये
त्वञ्चतिनजातु कविवादिकरिपञ्चमुखतावकपदम् ।
वञ्चनपर शठमकिंचनजनप्रियसपञ्चशरज
चञ्चलमिद पुनरचञ्चलतर कुरु भवच्चरणयो ॥ ६९

श्रीवेङ्कटेशस्य गुरो पदाब्जयो
समर्पिता सप्ततिरत्नमालिका ।
धृता सुधीभिर्हृदये विमत्सरै
पुष्णातु शोभां पुरुषार्थनिर्भराम् ॥ ७०

वेदान्ताचार्य सप्तत्या गुणवत्या परिष्कृत ।
वेदान्तवेद्य श्रीभाष्यकार कारुण्य गोचरा ॥ ७१

वीतरागा विशिष्टाथा वेदान्ताचार्य सप्ततिः ।
वैष्णवैस्सादर ग्राह्या विद्वद्भिर्वीतमत्सरै ॥ ७२

प्रतिवादि भयङ्करेणसा
 सुधिया सप्तति रत्नमालिका ।
निगमान्तगुरौ समर्पिता
 हृदयेतं भजतां स्वयाधिया ॥ ७३

कवितार्किकसिंहाय कल्याण गुणशलिने ।
 श्रीमते वेङ्कटेशाय वेदान्तगुरवेनमः ॥
 इति श्रीमत्प्रतिवादिभयङ्करार्यनार्य
 विरचिता श्रीमद्वेदान्तदेशिक सप्तति
 रत्नमालिका संपूर्णा ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

—०—

# शुद्धाशुद्ध पत्रिका

| पृष्ठ | श्लोक | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| ४ | २५ | ३ | शरण्य | शरण्य |
| २२ | १३ | ४ | कापिस्तनौ | कापितनौ |
| २७ | १० | ३ | कलाप | कलापै |
| २९ | २१ | १ | विनिर्मिता | विनिर्मिता |
| ३० | ६ | ३ | विमलमनसा | विमलमनसां |
| ३१ | १२ | ४ | विश्रम | विभ्रम |
| ३२ | १५ | ४ | स्थिरसमुदया | स्थिरसमुदयां |
| ३२ | १६ | ४ | तस्या तस्यामहमहमिकां | तस्यातस्यामहमहमिकां |
| ४१ | १ | ३ | कामधेनु | कामधेनु |
| ४१ | २ | १ | प्रिय | प्रियस्ते |
| ६५ | ७ | १ | एकादश्यामुमुक्ति | एकादश्यामभुक्ति |
| ६६ | १२ | ४ | यथार्हम् | यथार्हम् |
| ६७ | १७ | ३ | डाकैकात्यत लश्या | डाकैकात्यन्त लभ्या |
| ७० | २ | ३ | भुजास्पदेश | भुजापदेश |
| ८७ | ३ | १ | बहुतमोहभाजा | बहुलमोहभाजा |
| ८९ | ३ | १ | निश्चतः | निश्चितः |
| ९१ | २८ | ४ | परिसरेपु | परिसरेषु |
| ९३ | ४ | १ | पक्षिवल्क | पक्षिवक्त्र |
| ९५ | १ | ४ | गारुतत्मत | गारुत्मतं |
| ९५ | ३ | २ | धिष्णयात्माभिरजनि | धिष्ण्यात्मभिरजनि |
| १०१ | ३७ | १ | शिखादीप्त | शिखादीप्तं |
| १०० | ३१ | १ | कोटिचक्र | कोटिचक् |
| १०३ | ४७ | ४ | अरातिपक्ष | अरातिपक्षै |
| १०३ | ४६ | ४ | नरकविहृयते | नरकविहृतये |
| १५७ | २ | ३ | प्रणायिनां | प्रणयिनां |
| १५७ | ३ | ४ | सुरासुरेन्द्र | सुरासुरेन्द्रा |

| | | | | |
|---|---|---|---|---|
| १५७ | ४ | २ | सत्फलष्त्वम | सत्फलत्वम |
| १५८ | ६ | ३ | दहशुर्भवन्तत | दहशुर्भवन्त |
| १५८ | ७ | १ | विमर्द जन्मा | विमर्दजन्मा |
| १५६ | १४ | २ | शिशु मारम् | शिशुमारम् |
| १५६ | १५ | ३ | त्नोत्रप्रिय | स्तोत्रप्रिय |
| १७८ | ७५ | १ | अतिविधिशिवः | अतिविधिशिवैः |
| १८२ | १०१ | ३ | तैरेत्र | तैरेव |
| १८८ | ३२ | १ | नर्मलीला | नर्मलीला |
| २१२ | ६ | २ | तङ्गध | तदगाध |
| २१४ | १४ | २ | ताञ्यात्यु | ताचाप्युपादान |
| २१५ | २१ | ३ | आवष्य | आवद्ध |
| १२६ | २३ | २ | गुरूत्तमस्य | गुरूत्तमस्य |